# श्रीमन्महाराज संस्कृत महापाठशाला पत्रिका

त्रैमासिकी

सम्पुटम् ४ | एप्रिल् १९२८ | सञ्चिका २

सम्पादकः

महामहोपाध्यायः

पण्डितरत्न लक्ष्मीपुरं श्रीनिवासाचार्यः




मैसूरु

राजकीय शाखामुद्रालये सम्मुद्रिता

१९२८

॥ श्रीः ॥

श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका.

## विषयसूचना





## विज्ञप्तिः

भो भो महाशया ! सहृदया ! सप्रश्रयमिदमिदानीं विज्ञापयाम —संस्कृतविद्याभिमानिन पुरुषप्रवरा. य कचन विषयमाधिकृत्य संस्कृतभाषामय अनतिसंक्षिप्तविस्तर उपक्रमोपसंहारपरिकल्पित कस्याप्यनुद्वेगकर अचर्चितपूर्व कालदेशदशानुगुण प्रपञ्चोपकारकर धर्माद्यविरुद्ध जीर्णमङ्ग सुभाषितम्" इति निर्वेदस्य "वीरा वाचैव केवलम्" इत्यपवादस्य वा प्रशमकर प्रस्पष्टमुखविलासमुपन्यास विलिख्य यदि प्रेषयेयुर्महान्त, तेभ्यो महज्ञ्च समर्प्य अनन्तान् धन्यवादान् पत्रिकायामस्यां तमुपन्यास पारयाम प्रकाशयितुम् ॥

यदीच्छति वशीकर्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत् ॥
न हीदृश संवनन त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दान च मधुरा च वाक् ॥

संपादकस्य

---

## मूल्यप्रकारः

१ अस्या पत्रिकाया वार्षिक अग्रिम मूल्य सार्धैकरूप्यक प्रापणव्ययपृथक्कृतम् (भारतमण्डले)
२ विद्यार्थिना पुन एकरूप्यकम्
३ विभिन्नदेशे सपादरूप्यद्वयम् (3 s) प्रापणभृति पृथक्

पत्रिकाप्राप्तिस्थानम्,

सि. रामानुजय्यंगार्,

श्रीमन्महाराजसंस्कृतमहापाठशालाध्यक्ष मैसूरु.

॥ श्री॰ ॥

श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका॰

# विषयसूचना

---

# विज्ञप्तिः

भो भो महाशया ! सहृदया ! सप्रश्रयमिदमिदानीं विज्ञापयाम —संस्कृतविद्याभिमानिनः पुरुषप्रवरा, ये कञ्चन विषयमाधिकृत्य संस्कृतभाषामयं अनतिसंक्षिप्तविस्तरं उपक्रमोपसंहारपरिकर्मिनं कस्याप्यनुद्वेगकरं अचर्वितपूर्वं कालदेशदशानुगुणं प्रपञ्चोपकारकरं धर्माद्यविरुद्धं 'जीर्णमङ्गे सुभाषितम्' इति निर्वेदस्य 'वीरा वाचैव केवलम्' इत्यपवादस्य वा प्रशमकरं प्रस्पष्टमुखविलासमुपन्यासं विलिख्य यदि प्रेषयेयुर्महान्तः, तेभ्यो महज्ञ्च समर्प्य अनन्तान् धन्यवादान् पत्रिकायामस्यां तमुपन्यासं पारयाम प्रकाशयितुम् ॥

यदीच्छति वशीकर्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत् ॥
न हीदृशं संवननं त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दानं च मधुरा च वाक् ॥

संपादकस्य

---

# मूल्यप्रकारः

१ अस्याः पत्रिकायाः वार्षिकं अग्रिमं मूल्यं सार्धैकरूप्यकं प्रापणव्ययपृथक्कृतम् (भारतमण्डले)
२ विद्यार्थिनां पुनः एकरूप्यकम् प्रापणव्ययं पृथक्कृतम्
३ विभिन्नदेशे सपादरूप्यद्वयम् (3 s) प्रापणभृति पृथक्

पत्रिकाप्राप्तिस्थानम्,

सि. रामानुजय्यंगार्,

श्रीमन्महाराजसंस्कृतमहापाठशालाध्यक्ष. मैसूरु.

॥ श्रीः ॥

श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका.

# विषयसूचना

| सङ्ख्या | विषय —प्रबन्धार | पुटसङ्ख्या |
|---|---|---|
| १ | श्रीकृष्णनृपोदय<br>शिवमोग्गा कुक्के सुब्रह्मण्यशास्त्रिण | ६९ |
| २ | काळिदासोपज्ञरसज्ञता<br>महाविद्वांस क ॥ गोपालकृष्णशास्त्रिण | ८० |
| ३ | अम्बास्तुति<br>केशवभट्ट , विद्यार्थी | ८८ |
| ४ | पाठशालावृत्तान्त | ८९ |
| ५ | मीमांसाभाष्यभूषणम्<br>महामहोपाध्याया पण्डितरत्न लक्ष्मीपुर श्रीनिवासाचार्या | १०५ |



# विज्ञप्तिः

भो भो महाशया ! सहृदया ! सप्रश्रयमिदमिदानीं विज्ञापयाम–संस्कृतविद्याभिमानिन पुरुषप्रवरा य कचन विषयमाश्रिकृत्य संस्कृतभाषामय अनतिसंक्षिप्तविस्तर उपक्रमोपसंहारपरिकमित कस्याप्यनुद्वेगकर अचर्चितपूर्वं कालदेशदशानुगुण प्रपञ्चोपकारकर धर्माद्यविरुद्ध "जीर्णमङ्गे सुभाषितम्" इति निर्वेदस्य 'वीरा वाचैव केवलम्" इत्यपवादस्य वा प्रशमकर प्रस्पष्टमुखविलासमुपन्यास विलिख्य यदि प्रेषयेयुर्महान्त, तेभ्यो महद्भ्य समर्प्य अन तान् धन्यवादान् पत्रिकायामस्या तमुपन्यास पारयाम प्रकाशयितुम् ॥

यदीच्छति वशीकर्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत् ॥
न हीदृश संवनन त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दान च मधुरा च वाक् ॥

सपादकस्य

---

# मूल्यप्रकारः

१ अस्या पत्रिकाया वार्षिक अग्रिम मूल्यं सार्धैकरूप्यक प्रापणव्ययपृथक्कृतम् (भारतमण्डले)
२ विद्यार्थिन पुन एकरूप्यकम् प्रापणव्यय पृथक्कृतम्
३ विभिन्नदेशे सपादरूप्यद्वयम् (3 s) प्रापणभृति पृथक्

पत्रिकाप्राप्तिस्थानम्,

**एच्. योगनरसिंहार्यः,**

श्रीमन्महाराजसंस्कृतमहापाठशालाध्यक्ष, मैसूरु.

॥ श्री ॥

श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका.

# विषयसूचना





# विज्ञप्तिः

भो भो महाशया ! सहृदया ! सप्रश्रयमिदमिदानीं विज्ञापयाम —संस्कृतविद्याभिमानिन पुरुषप्रवरा, य कचन विषयमाधिकृत्य संस्कृतभाषामय अनतिसंक्षिप्तविस्तर उपक्रमोपसंहारपरिकर्मित कस्याप्यनुद्वेगकर अचर्चितपूर्व कालदेशदशानुगुणं प्रपञ्चोपकारकर धर्माद्यविरुद्ध "जीर्णमङ्गे सुभाषितम्" इति निर्वेदस्य 'वीरा वाचैव केवलम्" इत्यपवादस्य वा प्रशमकर प्रस्पष्टमुखविलासमुपन्यास विलिख्य यदि प्रेषयेयुर्महान्त, तेभ्यो महद्भ्यः समर्प्य अनन्तान् धन्यवादान् पत्रिकायामस्या तमुपन्यास पारयाम प्रकाशयितुम् ॥

यदीच्छति वशीकर्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गाश्चरन्तीर्निवारयेत् ॥
न हीदृशं संवनन त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दान च मधुरा च वाक् ॥

सपादकस्य

---

# मूल्यप्रकारः

१. अस्या पत्रिकाया वार्षिक आग्रिमं मूल्य सार्धकरूप्यक प्रापणव्ययपृथक्कृतम् (भारतमण्डले.)
२ विद्यार्थिन। पुन एकरूप्यकम् प्रापणव्यय पृथक्कृतम्
३ विभिन्नदेशे सपादरूप्यद्वयम् (3 s ) प्रापणभृति पृथक्

पत्रिकाप्राप्तिस्थानम्,

एच्. योगनरसिंहार्यः,

श्रीमन्महाराजसंस्कृतमहापाठशालाध्यक्षः मैसूरु.

# विषयसूचिका.

---

## शोधनपत्रिका.

| पुट | पङ्क्ति | पठनीयम |
|---|---|---|
| 92 | 21 | तत्साधना |
| 95 | 14 | क्लिश्नता |
| 96 | 11 | भयादा |
| ,, | 21 | र्यार्थत्वे |
| 97 | 14 | जैमिनि |
| 9 | 4 | समामन |
| 15 | 19 | चोदनैव |
| 27 | 23 | ताद्दक् |
| 31 | 17 | मन्यन्ते |
| 33 | 1 | सतीन्द्रिया |
| 36 | 2 | भूतियैं |
| 37 | 20 | यत्प्राथ |
| 40 | 2 | नुपलब्धे |
| ,, | 6 | विश्वविदितौ |
| ,, | 15 | तिष्ठन्त |
| 51 | 2 | निद्राक्रा |
| 56 | 2 | सभवात् |
| ,, | 15 | तत्रापि |
| ,, | 20 | रस्तदा |
| 57 | 13 | अतो |

| पुट | पङ्क्ति | पठनयिम् |
|---|---|---|
| 64 | 9 | कल्पनसि |
| 69 | 21 | शाक्या |
| 7˜ | 7 | देश ) म् |
| 78 | 15 | धीन |
| ,, | 17 | निरपेक्ष |
| 78 | 19 | विरुद्धमि |
| 81 | 17 | भामहे |
| 83 | 15 | वर्णपर |
| 89 | 20 | वनवत् |
| 93 | 1 | सबन्ध |
| 94 | 6 | वृद्धिर्यस्या |
| ,, | 12 | प्रमाणमन्त |
| 95 | 2 | प्रथमश्र |
| ,, | 3 | दवश्य |
| 98 | 3 | यणस्या |
| 104 | 9 | समानक |
| 120 | 11 | कर्णश |
| 124 | 22 | शाक्यामि |
| 132 | 22 | कल्प्यते |
| 134 | 1 | वाक्यार्थं |

इदमवधेय—आदित 8 म पुटपर्यन्तं पत्रिकापुटसंख्या निवेशिता। तत पृथगेव संख्या पुस्तकसौकर्याय प्रकाशिता।

इद पुनरवधेय—अष्टमपुटभाष्यं अन्त्य पङ्क्तित्रयं सप्तमपुटभाष्यान्तभागे पठनीयम् ॥

॥ श्रीः ॥

# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका

प्रतिमासन्त्रय प्रकटीक्रियमाणा

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समा

(ईशोपनिषत्)

सपुट-४] जनवरि १९२८ [सञ्चिका-१

येन ध्वस्तमनोभवेन बलिजित्काय पुरास्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयोगगा च योऽधारयत् ।
यस्याहुश्शशिमच्छिरोहर इति स्तुत्य च नामामरा
पायात्स स्वयमन्धकक्षयकरो न स्सर्वदोमाधव ॥

## स्वविषयः

अयि! महाशया इदमिदानीमवधारयितुमर्हन्ति भवन्त' तत्र भवन्त अशेषजनसभावनीया. असभवदवद्यगन्धा अस्या पत्रिकायाः ग्राहका अनुग्राहकाः पाठका प्रचारकाश्च महान्त' ॥

पत्रिकायाः पुनरस्यास्तृतीयोऽप्यब्दपूर्त्युत्सवः श्रीमतो महाराजस्य रजतमहोत्सवेन साक निर्वृत्त इति महाभाग्यमेवैतत् ॥

एतस्या पत्रिकायाः तुरीयेऽपि वर्षारम्भे साजलिबन्धेन शिरसा सनमोवाकेन वचसा सदैवसंपदा मनसा च भगवन्तमुभयाविभूतिक-मुभयलिङ्गक वासुदेव समुपास्य भूयोभिर्धन्यवादै सदयहृदयान् पत्रि-

काया ग्राहकाननुग्राहकांश्च महोदारान् अभिनन्द्याविघ्नेन पत्रिका-प्रकाशने प्रवर्तामहे । प्रयतामहे च यथाबलं निरपराधेनानेन व्यापारेण जगदन्तरात्मानं प्रशासितारं सर्वेषामणीयांसमणीयसा रुक्माभं स्वप्न-धीगम्यं पुरुषोत्तमं समाराधयितुम् ॥

इदमेव खल्वस्माकं सौभाग्यं, यद्वत्सरत्रयं निरवग्रहं पत्रिकैषा प्राचरदिति । यतः प्रारम्भशौर्यशालिन्यः बह्व्यः संस्कृतपत्रिकाः अन्तरायप्रतिहता नैतावन्तमपि कालं प्रकाशमुपगताः । एषा तु खलु तुरीयश्रीमत्कृष्णराजमहाराजकृपातिशयेन भवतामादरातिशयेन च तुरी-यमपि वत्सरारम्भमहोत्सवमुद्युङ्क्तेऽनुभवितुम् ॥

इतःपरं पुनरस्माकं महतीधृतिरस्ति चिरं जीवतीयं पत्रिकेति । यस्मात् त्रैवार्षिक्येव बालग्रहपीडाऽपि बालानाम् । तस्मादाशास्महे एतावन्तमर्थकलापमस्याः पत्रिकायाः । यथा—निरवद्यपथप्रस्थानं सज्ज-नचित्तविनोदनं अनुद्वेगकरवचनं संभवत्यप्यपराधे सुलभसमाधानं सुभा-षितप्रवचनं महाजनमानसोल्लासैकप्रयोजनं इत्यादिकम् ॥

पत्रिकायामस्याः प्रतिपाद्या विषयाः समुद्देशविशेषाः संपत्तिपरि-कराश्च यथावस्थिता एव अतीतेषु वर्षारम्भेषु सम्यगेव संसूचिता इति पुनरप्यसकृदावेदनेन नैव विक्षिपामः महाजनानां विविधव्यापारावधान-निरवकाशानि अपूर्वविषयग्रहणसमुत्सुकानि मनांसि । परं तु पत्रिका-प्रकाशनपदसुलभाः स्खलितविशेषाः मर्षणीया महाशयैरिति भूयोभूयः प्रार्थिता अपि पुनः प्रार्थयामहे ॥

शय्या शाद्वलमासनं शुचिशिला सद्म द्रुमाणामधः
शीतं निर्झरवारि पानमशनं कन्दाः सहाया मृगाः ।
इत्यप्रार्थितलभ्यसर्वविभवे दोषोऽयमेको वने
दुष्प्रापार्थिनि यत्परार्थघटनावन्ध्यैर्वृथा स्थीयते ॥
(उपकारः परो धर्मः) [नागानन्दनाटकम्.]

# कविकाव्यविचारः

## गुणाढ्य

प्रतिष्ठानपुराधीशसातवाहनभूपते ।
सभायामाद्यशतके गुणाढ्योऽभूद्बुधाग्रणीः ॥ १

अथ महाकविश्चक्रे भूतभाषामयीं पराम् ।
बृहत्कथा सप्तलक्षग्रन्थैः परिमिता शुभाम् ॥ २

प्राक्तनेषु प्रबन्धेषु गुणाढ्यस्य च तत्कृते ।
नाम निर्दिश्यते तैस्तैस्तत्रतत्र सुधीवरैः ॥ ३

तच्च वासवदत्ताया काव्यादर्शे च दृश्यताम् ।
भूतभाषामयीं प्राहुरद्भुतार्थां बृहत्कथाम् ॥ ४

बाणस्तु हर्षचरिते प्रशंसा कुरुते यथा ।
बृहत्कथा समुद्दिश्य गुणाढ्यकविनिर्मिताम् ॥ ५

समुद्दीपितकन्दर्पा कृतगौरीप्रसाधना ।
हरलीलेव नो कस्य विस्मयाय बृहत्कथा" ॥ ६

[1] कादम्बर्यां तथा वक्ति बाणो गद्यकवीश्वरः ।
इत्यस्ति दशरूपेऽपि "विभाव्य च बृहत्कथाम्" ॥ ७

त्रिविक्रमकवीन्द्रेण नलचम्पामितीरितम् ।
गुणाढ्यस्य कवीन्द्रस्य कथा वीक्ष्य रसोचराम् ॥ ८

शश्वद्बाणाद्वितीयेन नमदाकारधारिणा ।
धनुषेव गुणाढ्येन निःशेषो रञ्जितो जनः ॥ ९

---

[1] कादम्बर्यामुज्जयिनीवर्णने—"बृहत्कथाकुशलेन" इति ।

आर्यासप्तशतीनाम्नि गोवर्धनविनिर्मिते ।
महाकवेर्गुणाढ्यस्य प्रशंसा परिदृश्यताम् ॥ १०

अतिदीर्घजीविदोषाद्व्यासेन यशोऽपहारित हन्त ।
कैर्नोच्येत गुणाढ्यः स एव जन्मान्तरापन्न ॥ ११

[1] अलंकारे परिकरे चित्रार्थो न बृहत्कथाम् ।
इत्यप्पयदीक्षितकविः प्रत्न पद्यमुदाहरत् ॥ १२

[2] पाश्चात्यपण्डित कोऽपि वेबराख्यो विमर्शक ।
गुणाढ्य क्रिस्तशके षष्ठेऽभूदिति मन्यते ॥ १३

आचार्यदण्डिन कालस्स एवेति च वक्तव्ययम् ।
[3] दण्डिनाऽस्या कथायास्तु प्राचीनत्व समर्थितम् ॥ १४

एवसति स मेधावी वेबराख्यविमर्शक ।
गुणाढ्यदण्डिनोर्वक्ति समकालस्थिर्ति कथम् ॥ १५

[4] प्रथमे शतके क्रिस्तद्वितीये शतकेऽथवा ।
गुणाढ्यस्सबभूवेति भूलराख्य महाशय ॥ १६

[5] कीताख्य कोऽपि पाश्चात्यविमर्शकधुरधर ।
गुणाढ्यस्तुर्यशतके बभूवेति वदत्यहो ॥ १७

---

[1] कुवलयानंदे परिकरालंकारोदाहरणे दृश्यता ।

[2] Webers histroy of Indian Sanskrit literature

[3] भूतभाषामयीं प्राहुरद्भुतार्थां बृहत्कथाम् ।
इत्यत्र—प्राहुरितिपदेन स्वस्माद्बृहत्कथाया बहुप्राचीनत्व सूचयत्याचार्यदण्डीति नेदमविदित विदुषाम् ।

[4] A Macdonell's Sanskrit literature P 376

[5] A B Ceith's Sanskrit literature P. 93.

प्रायस्त्वय स्वभाव स्यात्पाश्चात्याना महात्मनाम् ।
यत्प्रत्नभारतीयाना कृतीना कृतिनामपि ॥ १८
अर्वाक्कनत्व यत्नेन स्थापनीय विशेषत ।
तेन पाश्चात्यसबोधाद्धीर्बभूवेति सिद्ध्यति ॥ १९
यदि प्रमाण लभ्येत स्वसिद्धातविघातकम् ।
तदा प्रक्षिप्तमित्युक्त्वा साधयन्ति स्वसविदम् ॥ २०
अहो ! महान् समारभ आङ्ग्लानामिष्टसाधने ।
शान्ता वय भारतीयास्ते वदन्तु यथातथा ॥ २१
अस्माक तु मत तावत्सातवाहनभूपते ।
सभायामाद्यशतके गुणाढ्योऽभूदिति स्थिरम् ॥ २२
कथामस्य समालब्य [1] रत्नावल्यादयोऽनघा ।
समुल्लसन्ति सर्वत्र ग्रन्था इति विमर्शका ॥ २३
काश्मीरानन्त राजस्य काले चैकादशे पुन ।
प्रकाशेन्द्रतनूजात क्षेमेन्द्रोऽभून्महामति ॥ २४
बृहत्कथा समालब्य मजरीं कृतवान् स्वयम् ।
गीर्वाणभाषया सर्वजनवेद्यस्वरूपया ॥ २५
सक्षिप्तां ता समालोक्य रामभट्टतनूभवः ।
सोमदेवोऽनतराज काले [1] चैकादशे पुन. ॥ २६
गभीरया मधुरया वाचा चक्रे कथार्णवम् ।
इति सिद्धातयत्यन्ये विमर्शनविचक्षणा. ॥ २७

---

[1] रत्नावळी–नागानद–प्रियदर्शिका–पञ्चतन्त्र–कादबरी–मालती-माधव–मुद्राराक्षस–वेतालपचविंशति–हितोपदेशादयो ग्रन्था बृहत्कथा मवलब्यैव समुत्पन्ना इति कथासरित्सागरोपोद्धाते काशीनाथशर्मा लिखति । [1–2] क्रिस्तैकादशेशतके.

भूतभाषामयीं दृष्ट्वा सोमदेवमहाकवि ।
गैर्वाण्या रचयामास कथा रसघनिष्ठया ॥ २८

भूतभाषामयी सा तु खण्डेऽस्मिन्भारतेऽधुना ।
द्वीपातरेषु वा हृत न कुत्राप्युपलभ्यते ॥ २९

क्षेमेंद्रोऽपि कथामेता गैर्वाण्यापर्यवर्तयत् ।
इतिस्फुरति नश्चित्ते ग्रथयोरवलोकनात् ॥ ३०

गुणाढ्यचरित तावत्सोमदेवबुधाग्रणी ।
कथासागरनाम्नि स्वे लिखत्येव समीक्ष्यताम् ॥ ३१

विंध्यारण्यप्रविष्टेन पृष्टोऽय काणभूतिना ।
गुणाढ्य स्वीयचरित प्राहेत्थमिति सगतिः ॥ ३२

प्रतिष्ठानेऽस्ति नगर सुप्रतिष्ठितसञ्ज्ञकम् ।
तत्राभूत्सोमशर्माख्य कोऽपि ब्राह्मणसत्तम ॥ ३३

बभूव तस्य विप्रस्य श्रुतार्था नाम कन्यका ।
श्रुतार्थायाः सुतो जातस्त हि जानीहि मा सखे ॥ ३४

गणावतारो जातोऽय गुणाढ्यो नाम भूसुर ।
इति तत्कालमुदभूदतरिक्षात्सरस्वती ॥ ३५

कालेन पचता याता जननी मे महामते ।
अथ शोक समुत्सृज्य बालोऽपि गतवानहम् ॥ ३६

स्वावष्टम्भेन विद्याना प्राप्तये दक्षिणापथम् ।
कालेन तत्र सम्प्राप्य सर्वा विद्या प्रसिद्धिमान् ॥ ३७

स्वदेशमागतोऽभूव दर्शयिष्यन्निजान् गुणान् ।
प्रविशश्च चिरात्तत्र दृष्टवानुत्तमा श्रियम् ॥ ३८

क्वचित्सामानि छंदोगा गायंति च यथाविधि ।
क्वचिद्विवादो विप्राणामभूद्वेदविनिर्णये ॥ ३९

एवंप्रायाण्यहं पश्यन् कौतुकानि पदेपदे ।
प्राप्तवान्राजभवनं महेंद्रसदनोपमम् ॥ ४०

ततश्चात प्रविष्टोऽहं शिष्यैरग्रे निवेदितः ।
आस्थानस्थितमद्राक्षं राजानं सातवाहनम् ॥ ४१

शर्ववर्मप्रभृतिभिर्मंत्रिभिः परिवारितम् ।
रत्नसिंहासनासीनममरैरिव वासवम् ॥ ४२

विहितस्वस्तिकारं मामुपविष्टमथासने ।
राज्ञा कृतादरं चैव शर्ववर्मादयोऽस्तुवन् ॥ ४३

अयं देव भुवि ख्यातः सर्वविद्याविशारदः ।
गुणाढ्य इति नामास्य यथार्थमत एवहि ॥ ४४

इत्यादितत्स्तुतिं दृष्ट्वा मंत्रिभिः सातवाहनः ।
प्रीतः सपदि सत्कृत्य मंत्रित्वे मां न्ययोजयत् ॥ ४५

अथाहं राजकार्याणि चिंतयन्नवसं सुखम् ।
शिष्यानध्यापयस्तत्र कृतदारपरिग्रहः ॥ ४६

कदाचित्कौतुकाद्भ्राम्यन्स्वैरं गोदावरीतटे ।
देवीकृतिरिति ख्यातमुद्यानं दृष्टवानहम् ॥ ४७

ततः कदाचिदध्यास्त वसंतसमयोत्सवे ।
देवीकृतं तदुद्यानं स राजा सातवाहनः ॥ ४८

विहरन् सुचिरं तत्र महेन्द्र इव नन्दने ।
वापीजलेऽवतीर्णोऽभूत्क्रीडितुं कामिनीसखः ॥ ४९

अर्सिचत्तत्र दयितास्सहेल करवारिभि ।
असिच्यत स ताभिश्च वशाभिरिव वारण ॥ ५०

अथैका तस्य महिषी राज्ञ स्तनभरालसा ।
शिरीषसुकुमारागी क्रीडती क्रममभ्यगात् ॥ ५१

सा जलैरभिर्षिचन्त राजानमसहा सती ।
अब्रवीन्मोदकैर्देव परिताडयमामिति ॥ ५२

तच्छ्रुत्वा मोदकान् राजा द्रुतमानाययद्बहून् ।
ततो विहस्य सा राज्ञी पुनरेवमभाषत ॥ ५३

राजन्नवसर कोऽत्र मोदकाना जलातरे ।
उदकै सिंच मा त्व मामित्युक्त हि मया तव ॥ ५४

सधिमात्र न जानासि माशब्दोदकशब्दयो ।
नचप्रकरण वेत्सि मूर्खस्त्व कथमीदृश ॥ ५५

इत्युक्तस्स तया राजा शब्दशास्त्रविदा नृप ।
परिवारे हसत्यतर्लज्जाक्रतो झडित्यभूत् ॥ ५६

परित्यक्तजलक्रीडो वीतदर्पश्च तत्क्षणम् ।
जातावमानो निर्लक्ष प्राविशन्निजमदिरम् ॥ ५७

पांडित्य शरण वा मे मृत्युर्वेति विचिंतयन् ।
शयनीयपरित्यक्तगात्र' सतापवानभूत् ॥ ५८

तत्र सर्वस्य रुद्धेऽपि प्रवेशे कथमप्यहम् ।
प्राविश मम पश्याच्चशर्ववर्मा लघुक्रमम् ॥ ५९

उपविश्याथ निकटे विज्ञप्त स मया नृप ।
अकारण कथ देव वर्तसे विमना इति ॥ ६०

श्रुत्वापि सुचिर भूपस्तूष्णीमासीदवाङ्मुख ।
मामस्तमौनः साकूतमवदच्च तत परम् ॥ ६१

शिक्षमाण. प्रयत्नेन कालेन कियता पुमान् ।
अधिगच्छति पाण्डित्यमेतन्मेकथ्यता त्वया ॥ ६२

मम तेन विना ह्येषा लक्ष्मीर्न प्रतिभासते ।
विभवै किं नु मूर्खस्य काष्ठस्याभरणैरिव ॥ ६३

ततोहमवद राजन्वर्षैर्द्वादशभिः सदा ।
ज्ञायते सर्वविद्याना मुख व्याकरण नरै. ॥ ६४

अह तु शिक्षयामि त्वा वर्षषट्केन तद्विभो ।
श्रुत्वैतत्सहसा सेर्ष्यंशर्ववर्मा किलावदत् ॥ ६५

सुखोचितो जन क्लेश कथ कुर्यादियच्चिरम् ।
तदह मासषट्केन देव! त्वा शिक्षयामि तत् ॥ ६६

श्रुत्वैवैतदसभाव्य तमवोचमह रुषा ।
षड्भिर्मासैस्त्वया देव शिक्षितश्चेत्ततो मया ॥ ६७

सस्कृत प्राकृत तद्वद्देशभाषा च सर्वदा ।
भाषात्रयविद त्यक्त यन्मनुष्येषु सभवेत् ॥ ६८

शर्ववर्मा ततोऽवादीन्नचेदेव करोम्यहम् ।
द्वादशाब्दान्वहाम्येष शिरसा तव पादुके ॥ ६९

इत्युक्त्वा निर्गते तस्मिन्नहमप्यगम गृहम् ।
राजाऽप्युमयत सिद्धिं मत्वाऽऽश्वस्तो बभूव सः ॥ ७०

विहस्त शर्ववर्मा च प्रतिज्ञा ता सुदुस्तराम् ।
पश्यन् सानुशयस्सर्वं स्वभार्यायै शशस तत् ॥ ७१

साऽपि त दु खितोवाच सकटेऽस्मिन् तव प्रभो ।
विना स्वामिकुमारेण गतिरन्या न दृश्यते ॥ ७२

तथेति निश्चय कृत्वा पश्चिमे प्रहरे निशि ।
शर्ववर्मा निराहारस्तत्रैव प्रस्थितोऽभवत् ॥ ७३

सोऽपि वातैकभक्षस्सन् कृतमौन सुनिश्चय' ।
प्राप स्वामिकुमारस्य शर्ववर्मान्तिक क्रमात् ॥ ७४

शरीरनिरपेक्षेण तपसा तत्र तोषित' ।
प्रसादमकरोत्तस्य कार्तिकेयो यथेप्सितम् ॥ ७५

आगत्य शर्ववर्माथ कुमारवरसिद्धिमान् ।
चिन्तितोपस्थिता राज्ञे सर्वा विद्या प्रदत्तवान् ॥ ७६

प्रादुरासश्च तास्तस्य सातवाहनभूपते ।
तत् क्षण किं न कुर्याद्धि प्रसाद पारमेश्वर ॥ ७७

राजार्हरत्ननिचयैरथशर्ववर्मा
तेनार्चितो गुरुरिति प्रणतेन राज्ञा ।
स्वामीकृतश्च विषये भरुकच्छनाम्नि
कूलोपकण्ठविनिवेशिनि नर्मदायाः ॥ ७८

ततो गृहीतमौनोह राजान्तिकमुपागमम् ।
तत्र च श्लोकमपठत् द्विजः कश्चित्स्वय कृतम् ॥ ७९

त चाचष्ट स्वय राजा सम्यक्सस्कृतया गिरा ।
तत्रालोक्य च तत्रस्थो जन प्रमुदितोऽभवत् ॥ ८०

ततोऽह कृतमौनत्वाद्व्यवहारबाहिष्कृत ।
अनिच्छत तमामन्त्र्य प्रणामेनैव भूपतिम् ॥ ८१

निर्गत्य नगरात्तस्माच्छिष्यद्वयसमन्वित ।
तपसे निश्चितो द्रष्टुमागतो विन्ध्यवासिनीम् ॥ ८२
इह प्राप्तोऽहमद्राक्ष पिशाचान्सुबहूनमून् ।
अन्योन्यालापमेतेषा दूरादाकर्ण्य शिक्षिता ॥ ८३
मया पिशाचभाषेय मौनमोक्षस्य कारणम् ।
प्रतिपालितवानस्मि यावदभ्यागतो भवान् ॥ ८४
दृष्ट्वा त्वां स्वागत कृत्वा चतुर्थ्या भूतभाषया ।
मया जातिस्स्मृतेत्येष वृत्तान्तो मेऽत्र जन्मनि ॥ ८५
एवगुणाढ्यवचसा साऽथ सप्तकथामयी
स्वभाषया कथा दिव्या कथिता काणभूतिना ॥ ८६
ईदृशी च कथा कुत्र कदा कस्य कृतेऽभवत् ।
इतिचेत्पृच्छते तच्च कथ्यतेऽस्माभिरादरात् ॥ ८७
पृष्ट कदाचित्पार्वत्या शकर श्रितशकर ।
विद्याधराणा चरित प्रवक्तुमुपचक्रमे ॥ ८८
निरुद्धेऽपि तदा द्वारे पुष्पदन्तो गणोत्तम ।
अलक्षितो योगवशात्प्रविवेश स तत्क्षणात् ॥ ८९
प्रविष्ट श्रुतवान् सर्व वर्ण्यमान पिनाकिना ।
विद्याधराणा सप्तानामपूर्व चरिताद्भुतम् ॥ ९०
श्रुत्वाऽथ गत्वा भार्यायै जयायै सोऽप्यवर्णयत् ।
को हि वित्त रहस्य वा स्त्रीषु शक्नोति गूहितुम् ॥ ९१
साऽपि तद्विस्मयाविष्टा गत्वा गिरिसुताग्रतः ।
जगौ जया प्रतीहारी स्त्रीषु वाक्सयम कुत ॥ ९२

ततश्चुकोप गिरिजा नापूर्वं वर्णितं त्वया ।
जानाति हि जयाऽप्येतदिति चेश्वरमभ्यधात् ॥ ९३

प्रणिधानादथ ज्ञात्वा जगादैवमुमापतिः ।
योगी भूत्वा प्रविश्येदं पुष्पदन्तस्तदाऽशृणोत् ॥ ९४

जयायै वर्णितं तेन कोऽन्यो जानाति हि प्रिये ।
श्रुत्वेत्यानाययद्देवी पुष्पदन्तमतिक्रुधा ॥ ९५

मर्त्यो भवाविनीतेति विह्वलं तं शशाप सा ।
शापान्तं प्रति शर्वाणी शनैर्वचनमब्रवीत् ॥ ९६

विंध्याटव्यां कुबेरस्य शापात्प्राप्तः पिशाचताम् ।
सुप्रतीकाभिधो यक्षः काणभूत्याख्यया स्थितः ॥ ९७

तं दृष्ट्वा संस्मरन् जातिं यदा तस्मै कथामिमाम् ।
पुष्पदन्त प्रवक्तासि तदा शापाद्विमोक्ष्यसे ॥ ९८

इत्युक्त्वा शैलतनया व्यरमत्तत्क्षणात्क्रुधा ।
आराधिताश्चेत् क्षांत्यैव के न कुर्युरनुग्रहम् ॥ ९९

ततस्समर्त्यवपुषा पुष्पदन्तः परिभ्रमन् ।
नाम्ना वररुचिः किंच कात्यायन इति श्रुतः ॥ १००

पारं समाप्य विद्यानां कृत्वा नन्दस्य मन्त्रिताम् ।
खिन्नः समाययौ द्रष्टुं कदाचिद्विन्ध्यवासिनीम् ॥ १०१

ददर्श च समीपेऽस्य पिशाचानां शतैर्वृतम् ।
काणभूतिं पिशाचं तं वर्ष्मणा सालसन्निभम् ॥ १०२

ततस्तस्मै कथामेतां वर्णयित्वा ततोऽब्रवीत् ।
इदानीं क्षीणशापोऽहं यतिष्ये देहमुज्झितुम् ॥ १०३

त्व च सप्रति तिष्ठेह यावदायाति तेऽन्तिकम् ।
शिष्ययुक्तो गुणाढ्याख्यस्त्यक्तभाषात्रयो द्विज· ॥ १०४

सोपि ब्रह्मिव क्रोधाद्देव्या· शप्तो गणोत्तमः ।
माल्यवान्नाम मत्पक्षपाती मर्त्यत्वमागत ॥ १०५

तस्मै महेश्वरोक्तैषा कथनीया महाकथा ।
ततस्ते शापनिर्मुक्तिस्तस्य चापि भविष्यति ॥ १०६

एव वररुचिस्तत्र काणभूतेर्निवेद्य स· ।
प्रतस्थे देहमोक्षाय पुण्य बदरिकाश्रमम् ॥ १०७

तत स मर्त्यवपुषा माल्यवान् विचरन् वने ।
गुणाढ्य इति विख्यात काणभूर्ति ददर्श स ॥ १०८

आश्रित्य भाषा पैशाचीं भाषात्रयविलक्षणाम् ।
श्रावयित्वा निज नाम काणभूतिमथाब्रवीत् ॥ १०९

पुष्पदन्तात् श्रुता दिव्या शीघ्र कथय मे कथाम् ।
येन शाप तरिष्यावस्त्व चाह च सम सखे ॥ ११०

इति तेनार्थितस्तस्मै तदा पैशाचभाषया ।
विद्याधराणा चरित काणभूतिरवर्णयत् ॥ १११

तथैवच गुणाढ्येन पैशाच्या भाषया तया ।
निबद्धा सप्तभिर्वर्षैः ग्रन्थलक्षाणि सप्त सा ॥ ११२

मैता विद्याधरा हार्षुरिति तामात्मशोणितैः ।
अटव्या मष्यभावाच्च लिलेख स महाकवि· ॥ ११३

गुणाढ्येन निबद्धा च ता दृष्ट्वैव महाकथाम् ।
जगाम मुक्तशापस्सन्काणभूतिर्निजा गतिम् ॥ ११४

प्रतिष्ठा प्रापणीयैषा पृथिव्या मे बृहत्कथा ।
अयमर्थोऽपि मे देव्या शापान्तोक्तावुदीरितः ॥ ११५

तत्कथ प्रापयाम्येना कस्मै तावत्समर्पये ।
इति चाचिन्तयत्तत्र स गुणाढ्यो महाकवि. ॥ ११६

अथैको गुणदेवाख्यो नन्दिदेवाभिध पर ।
तमूचतुरुपाध्याय शिष्यावनुगतावुभौ ॥ ११७

तत्काव्यस्यार्पणस्थानमेक श्रीसातवाहन ।
रसिको हि वहेत्काव्य पुष्पामोदमिवानिल' ॥ ११८

एवमस्त्विति तौ शिष्यावान्तिक तस्य भूपते ।
प्राहिणोत्पुस्तक दत्वा गुणाढ्यो गुणशालिनौ ॥ ११९

स्वय च गत्वा तत्रैव प्रतिष्ठानपुराद्बहि ।
कृतसकेत उद्याने तस्थौ देवीविनिर्मिते ॥ १२०

तच्छिष्याभ्या च गत्वा तत्सातवाहनभूपते ।
गुणाढ्यकृतिरेषेति दर्शित काव्यपुस्तकम् ॥ १२१

पिशाचभाषा ता श्रुत्वा तौ च दृष्ट्वा तदाकृती ।
विद्यामदेन सासूय स राजैवमभाषत ॥ १२२

प्रमाण सप्तलक्षाणि पैशाच नीरस वच ।
शोणितेनाक्षरन्यासो धिक्पिशाचकथामिमाम् ॥ १२३

तत पुस्तकमादाय गत्वा ताभ्या यथागतम् ।
शिष्याभ्या तद्गुणाढ्याय यथावृत्तमकथ्यत ॥ १२४

गुणाढ्योऽपि तदाकर्ण्य सद्य खेदवशोऽभवत् ।
तत्त्वज्ञेन कृतावज्ञ को नामान्तर्न तप्यते ॥ १२५

सशिष्यश्च ततो गत्वा नातिदूर शिलोच्चयम् ।
विविक्तरम्यभूभागमग्निकुण्ड व्यधात्पुर ॥ १२६

तत्राग्नौ पत्रमेकैक शिष्याभ्या साश्रुवीक्षित ।
वाचयित्वा स चिक्षेप श्रावयन् मृगपक्षिण. ॥ १२७

नरवाहनदत्तस्य चरित शिष्ययो कृते ।
ग्रन्थलक्ष कथामेका वर्जयित्वा तदीप्सिताम् ॥ १२८

तस्मिंश्च ता कथा दिव्यां पठत्यपि दहत्यपि ।
परित्यक्ततृणाहाराः अशृण्वन् साश्रुलोचना ॥ १२९

आसन्नभ्येत्य तत्रैव निश्चला बद्धमण्डला ।
निखिला. खलु सारग वराह महिषादय ॥ १३०

अत्रान्तरे च राजा भूदस्वस्थ सातवाहन ।
दोषचास्यावदन्वैद्या शुष्कमासोपभोजनम् ॥ १३१

आक्षिप्तास्तन्निमित्त च सूपकारा बभाषिरे ।
अस्माकमीदृश मास ददते लुब्धका इति ॥ १३२

पृष्टाश्च लुब्धका ऊचुर्नातिदूरे गिरावित ।
पठित्वा पत्रमेकैक कोऽप्यग्नौ क्षिपति द्विज ॥ १३३

तत्समेत्य निराहारा' शृण्वन्ति प्राणिनोऽखिलाः ।
नान्यतो यान्ति तेनैषा शुष्क मासमिद क्षुधा ॥ १३४

इति व्याधवच. श्रुत्वा कृत्वा तानेवचाग्रत. ।
स्वय सकौतुकाद्राजा गुणाढ्यस्यान्तिक ययौ ॥ १३५

ददर्श त समाकीर्ण जटाभिर्वनवासत' ।
प्रशान्तशेषशापाग्निधूमिकाभिरिवाभित ॥ १३६

नमस्कृत्य च पप्रच्छ त वृत्तान्त महीपति ।
ज्ञानी कथावतार तमाचख्यौ भूतभाषया ॥ १३७

ततो गणावतार त मत्वा पादानतो नृप ।
ययाचैता कथा तस्माद्दिव्या हरमुखोद्गताम् ॥ १३८

अथोवाच स त भूप गुणाढ्य सातवाहनम् ।
राजन् षड्ग्रन्थलक्षाणि मया दग्धानि षट्कथा ॥ १३९

लक्षमेकमिद त्वस्ति कथैका सैव गृह्यताम् ।
मच्छिष्यौ तव चात्रैतौ व्याख्यातारौ भविष्यत' ॥ १४०

इत्युक्त्वा नृपमामन्त्र्य त्यक्त्वा योगेन ता तनुम् ।
गुणाढ्य शापनिर्मुक्त' प्राप दिव्य निज पदम् ॥ १४१

अथ ता गुणाढ्यदत्तामादाय कथा बृहत्कथा नाम्ना ।
नृपतिरगान्निजनगर नरवाहनदत्तचरितमयीम् ॥ १४२

लक्षात्मिका कथामद्य पश्यता विदुषा हृदि ।
शिष्टनाशान्महद्दुःख हृत' हा' जायते ध्रुवम् ॥ १४३

रसोत्तराः कथा' श्रोतु वाछा यदि भवेद्भुवि ।
तर्ह्यवश्य कथा दृश्या गुणाढ्यकविनिर्मिता ॥ १४४

**इति सरळकविसूरि विद्याविभूषण, विद्यावाचस्पति,**
**काव्यविशारद, ज्ञानगुण करेत्यादि बिरुदांकितस्य**
**महाराज तुर्य श्रीकृष्णराजास्थान महाविदुष**
**अक्षयति वात्स्यराजगोपालसूरे**
**कृतिषु कविकाव्य विचारे**
**द्वितीय प्ररोह**

# कालिदासोपज्ञरसज्ञता

## कवयः

नत्वा किशोर नन्दस्य मन्दस्मितलसन्मुखम् ।
शृङ्गारानन्दसन्दोह तनोमि कविनाक्रमम् ॥

भो भो तर्कव्याकरणालकारादिशास्त्रपारावारपारीणा. सरसालकारकाव्यविचारचातुरीचुञ्चव . असाधारणकवितानिर्माणमार्मिकधुरीणा सहृदया सदयमिदमामोदयन्त्विति सप्रश्रयमावेदये ॥

विदितमेवैतदत्रभवता, यन्निसर्गसम्यञ्चि रमणीयवस्तुप्रतिपादनविचक्षणकाव्यनिर्माणरञ्जितलोकपुञ्जानि कविकुलानि सरससूक्तिसुधारसनिर्झरै सहृदयहृदयगमै पामराणामपि स्वान्तानि नितान्तमानन्दसन्दोहतुन्दिलान्यारचयन्तीति ॥ यदाहु'—

अविदितगुणापि सत्कविभणिति कर्णेषु वमति मधुधाराम् ।
अनधिगतपरिमलापि हि हरति दृश मालतीमाला ॥
मल्लीसुमचयविलसत्परिमलमुचि वाचि यो न मोदेत ।
ब्रह्मदयू वासुदयू र्वामदयूर्वा किमेतेन ॥
परिच्छिन्नस्वादोमृतगुडमधुक्षौद्रपयसा
कदाचिच्चाभ्यासात् भजति ननु वैरस्यमधिकम् ।
प्रियाबिम्बोष्ठे वा रुचिरकविवाक्येप्यऽनवधि
नवाऽनन्दः कोपि स्फुरति तु रसोसौ निरुपम' । इत्यादि ॥

काव्य च रसालंकारोल्लसितशब्दार्थसघटनात्मकमेव—

कविः शान्तो दक्षः सुजनविनुत' सुश्रुतरस
कलावेदी विद्वान् कलमृदुपद काव्यरचन ।

कृतज्ञो दैवज्ञ सदयहृदय सत्कुलभव
शुभाचार छन्दोगुणगणविवेकी स हि कवि ॥

इत्येवलक्षणलक्षिताना कवीना भारती भारतीप्रसादलब्धमहिमा सकलभुवनन्यपि करतलकलितबरसमानान्याकलयन्ती—

नियतिकृतनियमरहिता ह्लादैकमयीमनन्यपरतन्त्राम् ।
नवरसरुचिरा निर्मितिमादधती भारती कवेर्जयति ॥

इति सहृदयशिरोमणिमम्मटभट्टप्रतिपादितादिशा विजयतेतराम् ॥

तादृशी कविता च सहृदयहृदयावर्जिका लोके दुर्लभैव । यतो भण्यते—

नरत्व दुर्लभ लोके विद्या तत्र सुदुर्लभा ।
कवित्व दुर्लभ तत्र शक्तिस्तत्र सुदुर्लभा ॥ इति ॥

कवीना च समय लोकक्रममतिशेते, न तु नियमेन तमनुवर्तते । तथाहि—कविर्हि स्वकृतेषु महाकाव्येषु, अद्रिसामान्ये रत्नानि, अल्पजलाशयेपि हसादीन्, नदष्विप्यम्भोजादीनि कीर्त्यादौ शौक्ल्य, अकीर्त्यादिषु नैल्य, प्रतापक्रोधादिषु रक्तता चकोरेषु ज्योत्स्नापान, सर्वजलेषु शैवाल, अशोके कामिनिपादाघातेन पुष्पोद्गममित्यादीन्यसन्ति वस्तून्युपनिबध्नाति ॥

वसान्ते मालतीपुष्पादीनि, चन्दने फलपुष्पे, कुट्मलेषु रक्तता, नारीणा श्यामता, इत्येवमादीनि सन्त्यपि वस्तूनि न निबध्नाति । वर्षास्वेव शिखिनां प्रौढि हिमवत्येव भूर्जत्वक्, मलय एव चन्दनानि, हेमन्तशिशिरौ विना सर्वर्तुषु कमलानि, शैल वृक्ष मेघ वारिधि वीरुत्सु कार्ष्ण्यमित्यादीन् नियमान्पुरस्कृत्य व्यवहरति । अतएवेद निगद्यते,

अपारे काव्यससारे कविरेव प्रजापति. ।
यथास्मै रोचते विश्व तथेद परिवर्तते ॥

शृङ्गाररसप्रतीत्यौपयिकत्वेन नायिकामुखनयनकुचादीन्यङ्गानि वर्णयतीति एतावता कवे न स्त्रीमुखासक्तिकलुषितस्वान्तत्व सम-वति । अत्र रुद्रटाद्या एव समादधिरे—

न हि कविना परदारा एष्टव्या नापि चोपदेष्टव्या. ।
कर्तव्यतयाऽन्येषा न च तदुपायोऽभिधातव्य' ॥
किन्तु तदीय वृत्त काव्याङ्गतया स केवल वक्ति ।
आराधयितु विदुष तेन न दोषः कवेरत्र ॥
तया कवितया किं वा तया वनितया च किम् ।
पदविन्यासमात्रेण यया नापहृत मन ॥ इति ॥

एतेन नव्यविपश्चित्परिकल्पित महाकविभिर्निरूप्यमाण शृङ्गार-रसविचारः सारस्य नास्माक नवीननागरकाणामावहतीति स्वप्रातिभापारि-कल्पित सिद्धान्ताभास प्रत्युक्त प्रत्येतव्य ॥

औचित्यशरणा हि महाकवयः औचित्याविरोधेनैव सर्वत्र साम-रस्य माधातु प्रयतमाना परिदृश्यन्ते। ते च कवय स्वासिद्धान्तानुरोधेन क्वचित्सादृश्य, क्वचिदारोप, क्वचिदध्यवसाय, क्वचित्सन्देह, क्वचित् श्लेष, क्वचित्समासोक्ति, क्वचिच्चेतनेष्वचेतनस्वरूप, क्वचिदचेतनेष्वपि चेतनस्वरूप क्वचिन्मूर्तेष्वमूर्तत्व, क्वचिदमूर्तेष्वपि मूर्तत्वमभ्युपगम्य विदग्धभणितिप्रकारान् स्वमनिषोन्मिषितान् समुन्मेषयन्तीत्यहो कवीना समये चारुता । तदेतदुक्त ध्वन्यालोककृद्भि —

भावानचेतनानपि चेतनवच्चेतनानचेतनवत् ।
व्यवहारयति यथेच्छ सुकवि काव्ये स्वतन्त्रतया ॥

केवलं स्वभावोक्त्यालकारमात्रनिवेदननिष्णातप्रज्ञाशालिभ्य आधु-निकपाण्डिततल्लजेभ्यो न रोचत इयं सरणिरिति चेत्, काव्यार्थनिर-न्तरपरिशीलनसमुपजातसहृदयतोन्मिषितधिषणानां का हानि. । एवमेव

चाचार्याभिनवगुप्तपादा सञ्जगरिरे, "येषा निरन्तरकाव्याभ्यासवशात् विशदीभूते मनोमुकुरे वर्णनीयतन्मयीभवनयोग्यता त एव सहृदया रसज्ञा " इति च । आधुनिकेष्वापि केचित् एव अभिप्रयन्ति—

दीर्घपुच्छ. चतुष्पाद ककुद्मात् लम्बकम्बलः ।
गोरपत्य बलीवर्द' शष्पाण्यत्तीत्यलकृती ॥
स्वभावोक्ति रूपक च सादृश्य व्यक्तमाश्रिता ।
कवयन्ते नमस्तेभ्योऽविद्वद्भ्यो भणितेर्विधा ॥ इति च ॥

### कालिदास

एव च रसज्ञेषु महाकविषु अनन्यसामान्यगुणभूमा श्रीमान्कालिदासनामा महाकवि' सकलकविकुलतिलक इति जोघुष्यते । तथाहि—काव्यप्रकाशे "काव्य यशसेऽर्थकृते" इति कारिकाविवरणावसरे "कालिदासादीनामिव यश " इति प्रथम अमुमेव महाकविमजीगणत् । राजानकरुय्यकप्रभृतय ।

पुरा कवीना गणनाप्रसगे कनिष्ठिकाऽधिष्ठितकालिदासा ।
अद्यापि तत्तुल्यकवेरभावादनामिका सार्थवती बभूव ॥

इत्यादिना जयडिण्डिमताडनपूर्वक अद्यापि तत्तुल्य कविर्न तर्तत इति निरणैषु' । लौकिकानामाभाणकोपि परिदृश्यते " कवय' कालिदासाद्याः कवयो वयमप्यमी " इति ॥

स्वर्गेपि दुर्लभां कविसार्वभौमकालिदासप्रतिभालकृता कवितां भारतवर्षीया वय उपभुञ्ज्महे इति सगम्भीर भभाषिरे केचन रसिकशिरोमणयः । यथा—

एणमासमबला च कोमला माहिष दधि सशर्कर पय' ।
कालिदासकविता नव वय' स्वर्गशेषमुपभुञ्जते जना ॥

इति । अभिनन्दमहाकवी रामचरिते—"ख्यातिं कामपि कालिदास-

कवयो नीता शकारातिना" (विक्रमभूपालेन) इत्येवमभिननन्द। रम्भिकमणी राजशेखरमहाकवि सुभाषित हारावल्या—

एकोपि जीयते हन्त कालिदासो न केनचित्।
शृङ्गारे ललितोद्गारे कालिदासत्रयी किमु॥

इति व्याहार्षीत्। ज्योतिर्विदाभरणकारोपि भारतवर्षे विक्रम भूमिपालकाले कालिदासादीनि नव रत्नान्यासन्नित्यध्यवससौ। यथा—

धन्वन्तरिक्षपणकामरसिंहशङ्कु
वेतालभट्टघटकर्पर कालिदासा॰।
ख्यातो वराहमिहिरो नृपते सभाया
रत्नानि वै वररुचिर्नव विक्रमस्य॥ इति॥

## मातृभूमि

एवच समुदञ्चितगुणगणगणनीय कालिदासकविप्रकाण्ड॰ इम भरतखण्ड मण्डयामासेत्यहो भारतवर्षस्य वैभवम्। कालिदास भवभूत्यादीन्महाकवीन् व्यास वाल्मीकि पाणिनि पतञ्जलि प्रभृतीन् ऋषीन्, श्रीशबरस्वामि कुमारिलभट्टाचार्य श्रीशङ्करभगवत्पाद वाचस्पतिमिश्र विद्यारण्यवरेण्यान् तान् शास्त्रप्रवर्तकान् महार्घरत्नानि भगवती भारती भूमिः असूतेत्यहो भव्य भागधेय भावुकानाम्। ईदृशरत्नाना खनीभूते भारतवर्षे सुधासारसीमातिवर्ती कवितारस देवानामपि दुर्लभ इति प्रतिपादित एव। भारतवर्ष स्वर्गादपि समुत्कृष्टम् यतोत्रत्या॰ साधव समुचितधर्माद्यनुष्ठानेन ब्रह्मोपासनादिना वा स्वर्गादप्यनुत्तम ब्रह्मलोकादिक गन्तुमीशते। अपथ्यान्नभोजनवत् आसन्नमरणाधिकार नाकभोग॰ कस्मै नाम रोचेतेति श्रीहर्षमहाकवि॰ दमयन्तीमुखेन भारतवर्षस्य सर्वोत्तमत्व प्रफुल्लयति—

वर्षेषु यद्भारतमार्यवर्या स्तुवन्ति गार्हस्थ्यमिवाश्रमेषु ।
तत्रास्मि पत्युर्वरिवस्ययाऽह शर्मोर्मिकिर्मीरितधर्मलिप्सु ॥
स्वर्गे सता शर्म पर न धर्मा भवन्ति भूमाविह तच्च ते च ।
इष्ट्यापि तुष्टिः सुकरा सुराणा कथ विहाय त्रयमेकमीहे ॥
साधोरपि स्व' खलु गामिताधो गामी स तु स्वर्गमितःप्रयाणे ।
इत्यायतिं चिन्तयतो हृदि द्वे द्वयोरुदर्कः किमुशर्करे न ॥
प्रक्षीण एवायुषि कर्मकृष्टे नरान्न तिष्ठत्युपतिष्ठते य ।
बुभुक्षते नाकमपथ्यकल्प धीरस्तमापातसुखोन्मुख क ॥ इति ॥

एतादृशमहामाहिमानि भारतवर्षे जन्म लभमाना वय प्रथितप्राचीन पुरुषधौरेयता वोढु न शक्नुम' । तदीय समज्ञाज्ञानपूर्वक लोकोत्तर-तदीयचरितादिक श्रोतु, पठितु वा न स्पृहयाम । भक्त्या तदाचरित-धर्माननुष्ठातु न प्रयतामहे । अनुष्ठाने अशक्नुवन्तोपि समीक्षितुमपि नोत्सहामहे । आस्माकीना बालका अपि परकीयासिद्धान्तश्रवणबद्ध-श्रद्धा' अन्यदीयवेषभाषादिकमनुकुर्वाणा., अबला इव केशवेशरचना-चातुरीविदग्धा , क्रीतान्नभक्ष्यभोजनदक्षाः, पाश्चात्यविद्यामात्रशिक्षण-विचक्षणतया धन्यमन्या' तत्रतत्र उपन्यासश्रवणमात्रेण कृतकृत्यतामभि-नयन्त सनातनधर्मजिज्ञासायामप्यनीहमाना स्वाभाविकीमार्यता ध्वस यितु कदध्वन्यवतरीतु चोत्सहमाना. प्रयतमानाश्च परिदृश्यन्ते ॥

## मातृभाषा

अहहा! यद्यपि वय राष्ट्रीयभाषाया आङ्गलविद्याया च गौरव दधानेषु समन्यामहे । नोदास्महे तान् । पाश्चात्यावेपाश्चित्यप्रदर्शितकला-शिक्षणादिषु न संशेमहे । तदीयप्रज्ञोपज्ञवैद्युतशक्त्यादिषु अतीव वैदग्ध्य निश्चिनुमहे । तदीययन्त्रोपकरणादीन्यद्याप्युपयुञ्ज्महे । यद्यद्व्यावहारिक-कार्यनिर्वाहकतया अपेक्षित तत्तत्सर्वैरप्यकामतया आभिलषणीयमेवेति

विश्वसिम । तथापि अस्मदीया बाला यावता ऐहिकव्यापारो निर्वोढव्य तावत्परकीय कलाशिक्षणादिषु वैदग्ध्यमधिगम्य पारलौकिकव्यवहारोपयोगि शास्त्राभ्यसनादिषु आदरेण प्रवर्तमाना स्वाभाविकमार्यत्वमपमार्ष्टुमनीप्सन्त॰, शाश्वतिके श्रेयसि श्रद्धधीरन्निति सदाकाक्षामहे । एवच आस्माकीनैरार्यबालकै॰ राष्ट्रभाषा मातृभाषा देशभाषा चेति भाषात्रयमवश्यमाश्रयितव्यमेवेत्यकामतः प्राप्तम् । तत्र राष्ट्रभाषा निरूपयितु न वयमिदानीमुद्युञ्ज्महे ॥

द्वैतीयीकी मातृभाषा तु पुरुषार्थार्थिभि सर्वै बालादिवृद्धान्तै आदरेण समाश्रयणीयेत्यभिमन्यामहे । सर्वेप्यार्यबाला॰ मातृभाषाया किं फल वर्तेतेति न सशयीरन् । यतो हि मातृभाषा सास्कृती परिशुद्धा गीर्वाणाना वाणी सती सृष्ट्याद्यारभ्य अद्ययावत् जेगयिते । गीर्वाणभाषेव काश्चिदपि भाषा॰ चिरकाल प्रतिष्ठा नालभन्त । विश्वामित्रादिवत् "अन्यामिन्द्र करिष्यामि" इत्यद्भुतशक्तिमुत्पादयितु, धर्मराजादिवत् हरिश्चन्द्रादिवच्च धर्मे सत्ये वा अवस्थापयितु साहायकानि भाषान्तराणि न शक्नुयुरिति दृढ प्रतीम । ततस्सर्वेप्यार्या॰ सन्मार्गेऽवस्थाय धर्मादिकमनुष्ठातु अधर्माचरणात् दुष्फलमनधिगतु च सास्कृती सनातना भाषा दृढ सेवेरन्निति श्रद्दध्महे ॥

केचन अनार्या सास्कृती भाषा मृतमयी भाषेति निश्शङ्कभाषमाणाः सध्यावन्दन सकल्प देवपूजनादिप्रत्यहव्यवहारेण जीवन्तीमपि तां अनिरीक्षमाणा॰ बालान्विप्रलम्भयन्त स्वकपोलपरिकल्पित प्रमाणाभासै॰ यथेच्छ विवदमाना॰ परिदृश्यन्ते । नैतावता तस्या भाषाया मृतप्रायत्व मुमूर्षुत्व वा सभवति । व्यवहर्तार एव सर्वत्र म्रियेरन् न तु भाषा मृतकल्पा अधिगम्यते । एतादृश सस्कृतभाषाया कीदृश सौन्दर्यं कीदृश वैदग्ध्य कीदृश सारस्य कीदृश वा सौख्यमित्यादिक विविच्य प्रदर्शयितुमिदानीमुत्सहामहे ॥

देशभाषा तु सर्वैस्सेवनीयेत्यत्र न केचिदपि सशेरते । प्रकृतेऽस्माकं कार्णाटिकी भाषा देशभाषात्वेन वरीवर्ति । तां च सर्वे बालका नियमेनाभ्यस्यन्ति । परं तु पारीणा भवितुं न प्रयतन्ते । यतो मातृभाषाभ्यसनं विना देशभाषापारीणता सुगमा न स्यात् । अतः कार्णाटिकान्प्रति मातृभाषा एवमावेदयते तराम्—

भोः कर्णाटमहीसुताः प्रियजना दीनां मदीयां गिरं
श्रुत्वा द्राक्परिशीलनां कुरुत च स्वान्ते परोक्तिं न हि ।
देश्यायां गिरि सर्वमेव भवितुं युक्तं तथापि प्रसूं
मा विस्मर्तुमसांप्रतं हि भवतां वाचां निदानं परम् ॥ १

मां दृष्ट्वा प्रहसन्ति नूतनजना जल्पन्ति निःशङ्कतः
भाषा नार्थकरी मृता न हि तया साध्यं किमप्यत्र वै ।
इत्येवं स्वकपोलकल्पितगिराऽवष्टभ्य मां सांस्कृतीं
सत्स्वेव प्रियपुत्रकेषु बत हा न्यक्कारयन्ति ध्रुवम् ॥ २

संध्यावन्दन देवपूजन नदीस्नानादि सत्कर्मसु
स्मार्तेष्वप्यथ वेदसिद्धमहितेष्वन्या न वागादृता ।
आर्यास्संस्कृतभाषया व्यवहरन्त्यश्रान्तमित्थं सति
ब्रूयुस्तेऽपशदाः कथं मृतमयी भाषेति निर्लज्जया ॥ ३

अज्ञाहं न मृता मुमूर्षुमपि मां दीनां स्मरेयुर्जनाः
नाहं मृत्युमुपागता तु भवतां कल्याणहेतुः परम् ।
वेदा मय्यखिलाः पुराणनिवहस्सच्छास्त्रबृन्दं महा
काव्यं नाटकरम्यसूक्तिरथ च व्यक्तं कलाः सर्वशः ॥ ४

सर्वे राष्ट्रगिराऽथवा व्यवहरन्त्वात्मीयभाषात्मना
संतुष्याम्यहमत्र नैव कलये दोषाङ्कुरं चाण्वपि ।
युष्माकं विरुदादिषु स्थितिमतीं प्रत्ना सुरैरातां
वाणीं मामवधूय नेशत इति ज्ञाप्यं च वस्त्वस्ति नः ॥ ५

॥ श्रीः ॥

# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका.

प्रतिमासत्रय प्रकटीक्रियमाणा.



"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः"

(ईशोपनिषत्)

सम्पुट-४] एप्रिल् १९२८ [सञ्चिका-२

प्रज्ञावैशाखवेधक्षुभितजलनिधेर्वेदनाम्नोऽन्तरस्थ
भूतान्यालोक्य मग्नान्यविरतजननग्राहघोरे समुद्रे ।
कारुण्यादुद्दधारामृतमिदममरैर्दुर्लभं भूतहेतोः
यस्तं पूज्याभिपूज्यं परमगुरुममुं पादपातैर्नतोऽस्मि ॥ १

यत्प्रज्ञालोकभासा प्रतिहतिमगमत् स्वान्तमोहान्धकारो
मज्जोन्मज्जच्च घोरे ह्यसकृदुपजनोदन्वति त्रासने मे ।
यत्पादावाश्रितानां श्रुतिशमविनयप्राप्तिरप्यप्यमोघा
तत्पादौ पावनीयौ भवभयविनुदौ सर्वभावैर्नमस्ये ॥ २

## श्रीमन्महाराज संस्कृत महापाठशालाया प्रभववत्सरीय विद्यार्थि पारितोषिक महासभाया पठिताः गीर्वाणभाषात्मका· श्लोका

सुरासुरनिषेविता शशिसितांशुजालावृता
सुधोदधिसुतायुता मुनिहृदब्जभृङ्गायिता ।
नतावनरता हिता सुकृतिना दयाराजिता
तनोतु भवता हित हयमुखी परा देवता ॥ १

श्रीगीर्वाणकलालताश्रयतरुस्सौजन्यवादान्यक-
प्रज्ञाधैर्यमुखानवद्यसुगुणाम्भोधिस्सता शेवधि ।
धर्मत्राणकृतादरश्शुभयशाश्श्रीशानुकम्पाबला-
दाचन्द्रार्कमिलातले विजयता श्रीकृष्णभूमीपति· ॥ २

श्रीकृष्णक्ष्मेशराज्यागमशुभदिवसेऽमुत्र विद्यागृहेऽत्र
छात्राणा वर्षजाता बहुमतिमुदिता कर्तुमेषा बुधानाम् ।
गोष्ठी तस्या कृपातश्शमदमकरुणाज्ञानवैराग्यभाजो-
नूनश्रीरङ्गनाथाभिधयतिपतयस्स्वामितामङ्गचकार्षु ॥ ३

यतीशाना एते सुचिरमिह विद्यागृहवरे
पुराऽधीतन्यायादिमविविधविद्यास्सुविदिताः ।
प्रधानन्यायाध्यापकपदमगुस्सम्प्रति परे
हयग्रीवास्थान महिततमदीप्ति हि दधते ॥ ४

ततस्तैश्छात्राणामनुपमकृपार्द्रैर्विरचितै-
रुदारैस्सम्मानैस्सुजनमणिकृष्णेन्द्रकलितै ।
निवासद्रव्याद्याकृतिविविधसाह्यैश्च रुचिरै-
स्तदीया मख्याऽत्र प्रतिशरदमिन्धेऽधिकतमा ॥ ५

कलाशाला नेतुर्नयपथगुणैकप्रणयिनो-
बहुश्रद्धोत्साहप्रगुणविमलाध्यापनजुषाम् ।
बुधाना छात्राणा रुचिरमतिभाजा च तनुता
हरिर्दीर्घं चायुर्धृढतनुशुभारोग्यधनताम् ॥ ६

इति महिशूरमहीपति वाणीप्रासाद पाठशालायाम् ।
मुख्यज्योतिस्तन्त्राध्यापक कविशेषसूरिराशास्ते ॥

श्रीमन्महाराज संस्कृतमहापाठशालाया
अभिनवभव माघ शुक्ल सप्तम्या

करूर शेषाचार्यः,
ज्योतिश्शास्त्र महोपाध्यायः.

## श्रीमन्महाराज संस्कृत महापाठशालाया प्रभववत्सरीय विद्यार्थि पारितोषिक महासभाया पठिताः गीर्वाण भाषात्मकाः श्लोकाः

स्वस्ति स्वागतमस्तु तत्रभवते शाताय दाताय च
श्रीमन्नूतन रङ्गनाथ परकालाख्याय ते स्वामिने ।
अध्यक्षत्वमुपेत्य सत्परिषदो विद्यार्थिसम्मानना
प्रीत्या यत्क्रियते त्वयाद्य तदहो धन्याश्च मान्या वयम् ॥ १

श्रीमद्विद्यापदाचद्गणपतिकरुणापागपूतातराळा
सेयं गीर्वाणविद्याविहरणधरणि पाठशाला विशाला ।
अज्ञानादुद्धरती दृढतरतमसो ज्ञानदीप प्रकाश्य
च्छात्रान् मातेव पुत्रानवतु विगलितान्योन्यभेदप्रसगा ॥ २

श्रीमन्नाल्वाडि कृष्णराज करुणासाम्राज्यसारस्वत–
प्रासादाभिध पाठसद्मनि वरे सद्वैदिकाध्यापकाः ।
कर्णाटोद्धृतिहेतवे विनयवद्वृत्ताश्च विद्यार्थिनो–
लोकाज्ञानतमो हरतु विलसत्कीर्तिप्रदीपाकुरै ॥ ३

गीर्वाणाख्यपारितोषिकसभाकार्यक्रमोपक्रम
श्रीमन्नाल्वडि कृष्णराजनृपते पट्टाभिषेकस्मृति ।
पौशाणा रथसप्तमी वरतिथौ यच्चात्र समेलन
तन्नः सप्रति पूर्वपुण्यनिवह पाकोन्मुखं मन्महे ॥ ४

श्रीमन्नाल्वडि कृष्णभूमिपतिना लोकोपकारात्मना
निर्व्याजोपकृति प्रजासु विहिता या सा न विस्मर्यते ।
ईषच्चापि तथापि तत्प्रतिकृतौ सप्रत्यशक्ता वय
सद्भक्त्या स्तुमहेऽद्य तद्धितकृने नित्य महोमाधवम् ॥ ५

नरहरि कविना रचित
श्रीबालसरस्वतीत्युपाह्वेन ।
स्वागतपञ्चकमेत-
द्धिताय जगत समर्प्यते भक्त्या ॥ ६

श्रीमन्महाराजसंस्कृतमहापाठशालाया | बालसरस्वती नरहर्याचार्य
श्रीमत्प्रभव माघ शुक्ल सप्तम्याम् | श्रीवाणीविलास बालिका पाठशालोपाध्यायः

॥ जयतु भगवान् ॥

श्रीबालसरस्वती नरहरिशर्मणा विरचित

## पाठशालाभ्युदयसल्लापः.

अथ प्रविशति सवयसा गोविन्देन सहाभाषमाणो गृहवितर्दिका गतो गोपाल

गोपालः—सखे गोविन्द! चिराद्दृष्टोऽसि। अपि कुशली भवान्? इदमासनमास्तीर्णम्, अत्रोपविश मुहूर्तम्। इहस्थावेव प्रकृतिसौन्दर्यसुखमनुभवाव।

गोविन्द—भो वयस्य! अहो ते विस्मृतिशीलता। आगामिनि रथसप्तमीदिने श्रीमन्महाराजसंस्कृतमहापाठशालाया ऐषमस्तनपारितोषिकमहोत्सवो भविता। तदुत्सवदिने सायन्तने च मुहूर्ते आमन्त्रणानुरोधेन मयावश्य तत्र गन्तव्यम्। तन्मा तस्मिन्नेव दिने स्मारयेत्यहमनुयुक्त.। तदद्योत्सवदिनमिति स्मारयामि त्वाम्।

गोपाल—वयस्य! क्षम्यताम्। विस्मृत खलु सर्वमेतदादितो मया। सम्यक्त्वया काले प्रतिबोधितोऽस्मि। बाढम्। भो ज्ञायता का वेला वर्तत इति।

गोविन्दः—(निर्वर्ण्य) सखे! परिणतप्राया सप्तमीतिथि.। हन्त पाठशालाया प्रवृत्त इव वार्षिकमहोत्सवो दृश्यते। अहो नु खलु चिराय सम्प्राप्तः समीहित समय। त्वर्यता त्वर्यता कृत विलम्बेन यथा महोत्सवकालो नातिवर्तेत तथैवावा परिषद. सामाजिकौ भवाव॥

[इत्युभौ परिक्रामत]

(तत प्रविशतो मध्येमार्गं मुकुन्दो मुरारिश्च)

मुकुन्दः—(अन्यतोदत्तदृष्टिं गोपालमालोक्य)सखे गोपाल! कुतस्तवेद वैयात्य यत्समीपेनाप्यतिक्रामन्नितो दृष्टिं न ददासि ।

गोपालः—अहो ममानन्दकन्दो मुकुन्दः! श्रीमन्महाराज सस्कृतमहापाठशालाया मधुरमधुर श्रूयमाणो वाद्यविशेषो मा त्वरयति पाठशालानुप्रवेशाय । तन्महोत्सवावलोकनव्यग्र तवोपालम्भे पतितोऽस्मि ।

मुरारिः—मुकुन्द! कार्यान्तरव्यापृत मैनमन्तरा प्रतिबधान । ब्रूहि कियद्दूरे तद्गृह यत्र वयमाहूता ।

गोपालः—भोभो अलमलमन्यथासम्भावितेन । इय हि रुचिराकृति साविशेषप्रसाधितोत्सवसमाजस्यावर्जयित्री पाठशाला प्रेक्षकाणा मनासि निगलयति । तद्युवामावामपिच मिलितास्सन्त तत्र गत्वा वार्षिकमहोत्सवदर्शनजनितानन्दममन्दमनुभवाम ।

मुकुन्दः—(औदासीन्य नाटयन्) अये गोपाल! वर्षेवर्षे प्रवर्तितस्साधारणो वार्षिकमहोत्सव श्रुतदृष्टपूर्व एवास्माकम् । न तत्र कोऽपि वैचित्र्यविशेष । तत्र सर्वा प्रवृत्तिस्तु गीर्वाणभाषाविषयिणीति कर्णाकर्णिकया शृणुम । परन्तु सस्कृतभाषाया नास्माकमीषदप्यभिनिवेशः । तत्तत्रगताः किं जानीमो वयम् ।

मुरारिः—अपिच श्रूयता तावदत्र प्रतिकूलताप्रसङ्ग । तत्र गताना सुखोपवेशनार्थं नासनान्यास्तीर्णानि भवन्ति । सर्वैरपि तत्रगतै रवनितल एव समुपवेष्टव्यम् । तदपि यथाकथचित्सोढव्य स्यात् । इद हि नाम चित्तोद्वेजक यन्नयनानन्दकराणि नाटितकादीनि श्रवणानन्दकराणि सङ्गीतकादीनि वा वैदिकमण्डलीषु स्वप्नप्रायाण्येव खलु भवन्ति । न यत्र चित्ताकर्षणप्रसङ्ग तत्र जनैर्नगन्तव्यमेवेत्यस्माकमाशय । एह्येहि मुकुन्द! अन्यत्र साधयामो वयम् ।

गोपालः— सखे मुकुन्द ! अज्ञातपरमार्थस्त्वम् । वयस्य मुरारे ! निरर्गलवागसि यदनाशङ्कनीयं तदाशङ्कसे । श्रूयतां यदि कौतुकमावेदयामि । वैदिकानां लौकिकानां च महात्मनां यदेकत्र समावेशो नाम तन्महते फलाय ननु ॥

समागमो लौकिकवैदिकानां
देशोन्नतौ सम्मति मूलहेतुः ।
सहस्थितीरत्नसुवर्णयोश्च
पदं हि सर्वादरणीयतायाः ॥ १ ॥

किंच । रथसप्तमीनाम श्रीमन्महाराजपट्टाभिषेकदिनस्य ज्ञापयित्री प्रवर्तते । तदत्र राजाशीर्वचनप्रसङ्गो महान् ।

अपिच । श्रीश्री परकालयतीन्द्रपूज्यपादानामध्यक्षतायां वार्षिकोत्सवकार्यक्रमो यथाविधि निर्वर्तनीयः स्यात् । श्रीश्रीयतिवर्याणां दर्शनमात्रेणैव समस्तदुरितानि दूरीकृतानि स्युः । श्रीमद्गुरुवरचरणारविन्दसेवनं तद्वदनारविन्दनिरर्गलनिर्गलन्मधुरवचनोपसेवनं च नितरामसृतायते ॥

अयि परिचिनु चिरकालं
गुरुमभिनवरङ्गनाथपरकालम् ।
कामान्यस्सुमनोगं
विदधाति प्रणतवृन्दसुमनोगः ॥ २ ॥

किंच—

सालोक्यस्य सुखं भवेच्छ्रवणतो वाचां गुरोरादरा-
त्सामीप्यस्य परं सुखं मननतो यस्यान्तिरास्ते नृणाम् ।
सारूप्यस्य सुखं सखे परतरं स्याद्यन्निदिध्यासना
त्सायुज्यस्य भवेत्सुखं परमहो यस्मिन्हि साक्षात्कृते ॥ ३ ॥

अपरच तावत् । देशाभिवृद्धिविधौ प्रधानकारणतामापन्नाया श्रुतमात्रेणैव कर्णयोरमृतरसनिष्यन्दिन्या अवाङ्मनसगोचरमहिमभूषाया गीर्वाणभाषाया पवित्रतर प्रसङ्ग कस्य न स्यान्महते सुखाय ।

मुरारे ' तत्र पाठशालाया विशालाया समुपवेशनावकाशो नास्तीति न मन्तव्यम् । भूमितलोपवेशनादपि काष्ठासनोपरि समुपवेशन सर्वप्रकारेण परमानुकूल्याधायकमिति किन्नु मन्यते भवान् ? विद्धि काष्ठासन कष्टाय । तत्र नाटिनकसङ्गीतकादीना नामापि न श्रूयत इति यदवोच तदत्र श्रूयताम् । तदत्र महोत्सवावसरे गीर्वाणकर्णाटभाषामयानि शब्दार्थहृद्यान्यनवद्यानि पद्यानि सङ्गीतविशारदा मधुरमधुरस्वरा पठनचातुरीधुरीणा विविधरागरचनोपरञ्जित यथा पठन्ति ।

मुकुन्दः—(मुरारिं प्रति) मुरारे ' श्रुत श्रोतव्यम् । मित्रवर्येण गोपालेन यत्साधूपन्यस्त तदेव सर्वथा युक्तरूप मे रोचते । मनोविनोदनाय एवमिव अतर्कितोपनत कालो न सर्वजनसाधारणो लभ्यते । तदावामपि निर्विचारममुमेव प्रियवयस्यमनुसराव ।

मुरारिः—अनतिक्रमणीयवचनो भवान्मे प्रियवयस्य । अयमहमपि त्वयैव सह महोत्सवावलोकनसुखमनुभावितुमभिलषामि । (आकाशे कर्णं दत्वा) हन्त मङ्गलतूर्यनिस्वन समुज्जृम्भते । पश्य—

**यथायथा मङ्गलतूर्यनिस्वन**
**सुखश्रुतिर्यत्र सखे प्रवर्तते ।**
**तथातथा तत्र मनस्तमेव मे**
**रज्ज्वासमाकृष्टमिवानुधावति ॥ ४ ॥**

[सर्वे पाठशालाभिमुखीभवन्ति ]

मुकुन्दः—(सकौतुकं) अये गोपाल ' कौतुक मे व्यपनय तावत् । महतो राजाशीर्वचनस्य को हेतुः ?

गोपालः—श्रीमन्महाराजस्य अचिरप्रवृत्तो रजतमहोत्सव किन्न ते श्रुतिविषयमायात ’ तन्महोत्सवावसरे तत्सभाजनाय कर्णाट-भूमण्डलस्य नानादिग्देशादागता. प्रजावर्गा महान्तमर्थव्यय कृत्वा स्वामिभक्तिव्यञ्जनाय राजधानीमागतवन्तः। तथाहि—

संप्राप्ते रजतोत्सवे द्विजवरा विश्वंभरानायका.
वैश्याश्शूद्रगणाश्च हूणपतयो विद्यावदग्रेसराः।
सूता मागधवन्दिनश्च गणिकाः शैलूषका गायका'
पौरा जानपदा परेऽपि बहवो नानास्पदादागता' ॥ ५॥

ततःपरम्—

श्रीमत्कृष्णनृपो नतेन शिरसा सङ्गृह्य विप्राशिष
कारुण्यार्द्रदृशा प्रजास्ततइतोऽपश्यत्प्रसन्नानन ।
नेमुः प्राञ्जलयोऽस्तुवन्परमया भक्त्या प्रजा स्वामिन
ताभ्योऽदादभयं “करोमि भवता धर्मेण रक्षा” मिति ॥६

किंच—

यदुवंशनृपालानां सप्तमेवोद्धराम्यहम् ।
इति गोत्रव्रतं यत्नाल्लोकक्षेमाय प रयते ॥ ७॥

अहो महाराजस्य पितुः पुत्रेष्विव प्रजासु पक्षपातित्वम्। यतः।

ब्राह्मणानर्चयामास तोषयामास भूमिपान्।
वैश्यानुल्लासयामास नन्दयामास चेतरान् ॥ ८॥

प्रजानामीदृग्विधा स्वामिभक्तिमालक्ष्यालक्ष्य महीशूरपुरवास्तव्या. प्रजा वयमपि परमानन्दभाजोऽभूम।

अस्मिन्दिने तावत्कृतज्ञतानिवेदनपूर्वक श्रीमन्महाराजाधिराजस्य

श्रीमन्नाल्वडिकृष्णराजसार्वभौमस्य बहुधाभिनन्दनं कुर्वन्ति सर्वे विद्वद्वरेण्या वैदिकमहाशया विनयावनता विद्यार्थिनश्च ।

मुरारि —वयस्य! श्रीमन्महाराजस्य चैतस्या पाठशालायाश्च कोनाम सबन्ध ?

गोविन्दः—मुरारे! अत्रास्ति न किमपि वक्तव्यम् । तदवधानदानेन प्रसाद कुरु । विस्तीर्णस्स वृत्तान्त न शक्यते साकल्येन वर्णयितुम् । तथापि सक्षिप्य कथयामि । श्रीमन्महाराजोऽस्माक वर्षेभ्यश्चतुर्भ्य प्रागेतत्पाठशालाया' पारितोषिकमहोत्सवावसरे सभाध्यक्षपदमध्यमध्यासीनो निजेनामूल्यभाषणेन सस्कृतभाषाया यावानभिमानस्तस्य तावन्तमप्याधारत्वेन स्वीकृत्य स्वाभिप्रायप्रकाशनमकार्षीत् । किंच परुत्प्रवृत्ते पाठशालाया पञ्चाशसवत्सरमहोत्सवावसरेऽपि प्रभुरेषोऽस्माक अनर्घ्येणाध्यक्षभाषणेन सर्वानपि सामाजिकान् चित्रार्पिता रम्भानिवातनोत् ।

शृणु सखे! अपरमपिच पाठशालायामिदप्रथमानुभूतमाश्चर्यम् । यन्महाराजोऽस्माक सस्कृतभाषायामनन्यसामान्याभिमानप्रकाशनाय वैदिकजनानुरागप्रकटितामन्दानन्दसन्दोहसन्दीपनाय च विद्वन्मण्डलीमध्यगतस्सन् भावचित्रार्पितमात्मानमकार्षीत् । तत्रापीदमेव परमाद्भुतम् । यत —

**राज्ञा तेन लसद्दयातरलितापाङ्गैर्यदालोकितं**
**पूज्यान्वीक्ष्य मुहुस्सुधामधुरया वाचा यदामन्त्रितम् ।**
**कुत्रापीदृगभूतपूर्वविभवं तद्भावचित्रं प्रभोः**
**कालेनापि जनस्य चित्तफलकान्नोन्मार्जनीयं भवेत् ॥१॥**

मुकुन्दः—विद्यमानेष्वपि नानाधिकारस्थानेषु एतत्पाठशाला विषये महीपतेरनन्यसामान्याभिमानस्य केन हेतुना भवितव्यम् । वद मे यदि जानासि ।

गोपालः– तदेवमिव । अस्मन्महाराजस्य पितामहेन श्रीमन्मुम्मडि कृष्णराज महाराजेन पाठशालेय स्थापिताभूत् । ततोऽस्मन्महाराजस्य पित्रा श्रीमच्चामराजमहाराजेन मात्रा च श्रीवाणीविलासमहासन्निधानाभिधानया पाठशालेय क्रमक्रमादभिवृद्धिदशामनीयत । गुरुजनप्रसादादभिवर्धितेत्यस्या स्वत्वाभिमानेन हेतुना शाश्वतकालगोचरत्व सूचकै रनवरतरक्षणावेक्षणै रूढमूला प्रकल्पिता सती श्रीमन्नाल्वडि-कृष्णराजप्रभोरिदानीं कृपाकटाक्षस्य पूर्णपात्रीभवति ।

मरारिः—सखे मित्रस्नेहात्पृच्छामि । किमनया पाठशालया प्रयोजन किं चास्या वैशिष्ट्यम् ?

गोविन्द —यद्येव श्रोतुमिच्छा बलवती शृणोतु मे प्रियवयस्य सावधानेन मनसा ।

इय हि महती पाठशाला इहपरश्रेयस्साधनीभूताया गीर्वाणभाषाया स्थान । आस्थान विद्वदग्रेसराणा वैदिकवरेण्याना । सनातनार्यधर्मस्य स्थिरायतिसाधनाय प्रकल्पितो महासारस्वतप्रासाद । वेदवेदान्तादिसकलशास्त्राणा माकरो महान् । भरतखण्डगोचराणा मखिलगीर्वाणविद्यास्थानानामादर्श । कुलभवनमखिलविद्याविशारदाना वैदिकविद्वदग्रेसराणा मुपाध्यायाना । प्रसूतिसदन नानादिग्देशादागताना विनयवता मखिलविद्यार्थिजनानाम् ।

किं बुहुना वाग्विलसितेन । श्री श्री परकालयतिवर्याणा श्रीश्री शृंगगिरियतीन्द्राणा तथाचान्येषा महामहिमवता महाशयानामादरातिशयस्य महानाश्रय । श्रीविद्यागणपतिस्वामिना निरन्तराराधनाय महदेकायतनम् ।

मुकुन्दः—सखे ! सर्वमिदमादितो ज्ञात ज्ञातव्यमिदानीम् । अत्र च महाराजस्य स्वत्वाभिमानविशेष कयाहि विधया सूचितो भवतीति विज्ञातुमीहते मे चेत ।

गोपालः—अवश्यज्ञातव्योऽय विषय प्रष्टव्य एव । श्रीमन्महाराजप्रभुरस्माक यावन्मात्रेण पाठशालाया आयव्ययकार्यनिर्वाहस्सा'ध्येत तावन्तमपि प्रत्यब्दमथोत्सर्ग विदधाति ।

मुरारिः— प्रतिपन्नवस्तुषु निर्वाहस्सता गोत्रव्रत हि । ततस्तत ।

गोपाल —उपाध्यायाना विद्यार्थिना च वेतनादिक राजकोशागारादेव वितीर्यते ।

मुकुन्द —परोपकारायैव सता विभूतय खलु । ततस्तत ।

गोपाल —अये अपरमपिच शृणु तावत् । सस्कृतपण्डितोत्तमा काले काले राज्ञ सकाशादनितरसाधारणानि पारितोषिकादीनि बिरुदादीनि योग्यतानुगुणा सभ्यर्हणा च लभमाना कृतकृत्यमात्मान मन्यन्तेतराम् ।

मुरारि'—अहो अस्मन्महाराजस्य सर्वसमताप्रतिपत्ति प्रजावर्गेषु । तथाहि—

**चण्डालोऽस्तु सतु द्विजोऽस्तु तदपि प्राज्ञोऽस्तु मूढोऽस्तु वा**
**राज्यक्षेमविधासु सर्वसमताज्ञानेन कर्णाटराट् ।**
**सर्वान्प्रापयितु महोन्नतिगतिं संचिन्तयन्दीव्यति**
**त्रैलोक्यं हि कुटुंबकं सुमनसा माश्चर्यचर्यावताम् ॥ १० ॥**

**गोविन्द** —अत एव सर्वत्र सस्तूयते महाराजोऽयमस्माकम् । यतः—

**आस्थानेषु महीभुजां मतिमतां गोष्ठीमुखेष्वादरा-**
**दन्योन्यप्रियसंङ्गसङ्गतकथालापेषु मार्गेषु च ।**
**आरामेषु च मन्दिरेषु च जनस्थानेषु च प्रत्यहं**
**श्रीमत्कृष्णमहीपमङ्गलगुणान्गायन्ति सर्वे जनाः ॥११ ॥**

मुकुन्द — सखे साध्वभिहित । तद्ब्रूहि

श्रीमत्कृष्णमहीपः
परहितकृतये धृतव्रतो नितराम् ।
प्रत्युपकर्तव्य कथ-
मधुनास्माभिः कृतज्ञताभिमुखै ॥१२॥

गोपाल —वयस्य ! युष्मत्सकाशाद्राजर्षिरस्मन्महाराज: सिद्ध-वागाशीर्वचनमन्तरा किमन्यदभिकाङ्क्षते । शृणु—

नेहते प्रत्युपकृतिं महान्परहिते रतः ।
सर्वर्तुफलवद्वृक्ष स्तत्रोदाहरण हि न ॥१३॥

[तदिदमस्तु भद्रवाक्यम्]

श्रीमद्दिव्याकृती श्रीतुरगजवदनश्रीहयग्रीवदेवौ
विद्याधीशौ वितत्ता महिसुरनगराधीशकृष्णक्षितीन्द्रो ॥
आरोग्यं दीर्घमायुर्निरवधिविभवं देवकर्णाटवाण्यो-
रत्यन्तासक्ति मुद्यत्प्रकृतिहितमतिं पुत्रपौत्रप्रपौत्रान् ॥१४॥

[सर्वे मिलित्वा गायन्ति]

कर्णाटक्षितिमण्डले विजयतां सद्धर्मकल्पद्रुमः
विद्या तत्प्रतिपादिका विजयता सर्वार्थचिन्तामणि ।
भूय स्तत्प्रविबोधिनी विजयतां संख्यावता मण्डली
ता एताः परिपालय न्विजयता श्रीकृष्णराजप्रभु: ॥१५॥

इति निष्क्रान्तास्सर्वे

## कालिदासोपज्ञरसज्ञता.

[४ स १ संख्यिका २४ तमपृष्ठात्]

यूय प्रामुथ पुष्कल धनचय वाणिज्यत शिल्पत
मुख्याच्चाधिकृतोऽपि कीर्तिमतुलामाचन्द्रतार स्थिराम् ।
मोदे तत्र मुहुर्मुहु कुलधन मा सर्वथा श्रेयसा
हेतु सम्मरथ प्रतिक्षणमसौ (अह) बालादिभि पठ्यताम् ॥ ६

इति । मातृभाषारूपाया सस्कृतभाषाया असदक्षशेमुषीविशेषस्य आविर्भावकाल मनागावेदयामहे । कालिदासो हि शाकुन्तले प्रथमेऽङ्के शकुन्तलाया क्षत्रजत्वे सदिहान तस्या निरर्गला मानसस्य प्रवृत्ति विभावयन् तत एव प्रवृत्ते शकुन्तलाया क्षत्रियत्व—

असशय क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मन ।
सता हि संदेहपदेषु वस्तुषु प्रमाणमन्त करणप्रवृत्तय ॥

इति निश्चिकाय । तदिद पद्य, श्रीशङ्कराचार्यसमकालिकै. कुमारिलभट्टाचार्यैः कृते तन्त्रवार्तिके सदाचारस्य प्रामाण्यनिरूपणावसरे —

एवं च विद्वद्वचनाद्विनिर्गत प्रसिद्धरूप कविभिर्निरूपितम् ।
सता हि सदेहपदेषु वस्तुषु प्रमाणमन्त करणप्रवृत्तय ॥

इति लिखितम् । अस्य च प्राक्तन पद्य—

यथा रुमाया लवणाकरेषु मेरौ यथैवोज्ज्वलरत्नभूमौ ।
यज्जायते तन्मयमेव तत्स्यात् तथा भवेद्वेदविदात्मतुष्टि. ॥

इति दरीदृश्यते । अस्यच सक्षिप्तोऽर्थ निरूप्यते—

श्रुति· स्मृतिः सदाचार स्वस्य च प्रियमात्मन ।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥

इत्यादिना सतामात्मतुष्टेरपि धर्मे प्रामाण्य मन्वादयोऽङ्गचकार्षु । सा किल आत्मतुष्टि एकान्तसमाहितानामार्याणा वेदविदामेव भवेत् न पुन स्वेच्छाचारिणा अप्रामाण्यशङ्काकलङ्कितानामिति भट्टाचार्यसमतोय पथा । यतस्तेषामार्याणामश्रान्तश्रुतिस्मृतिक्षुण्ण स्वान्त तन्मयतामापन्न न कदाचिदधर्मे प्रवर्तितु प्रभवेत् । यथा लवणनिर्माणस्थलेषु लवणखनिषु, रत्नसानौ वा यद्यद्वस्तु समुत्पद्यते तत्तत्तन्मयतामापद्यते । एवमनवरत श्रुतिस्मृतिपरिशीलिना स्वान्ते योयो विचार स्वरसन प्रादुर्भवेत् सस धर्मपथानुवर्ती धर्म एव स्यादिति विद्वाद्भि प्रतिपादनीयम् । प्रमाण चात्रार्थे — "कविभिर्निरूपितामिति" मीमासकमूर्धन्य' महाकवितल्लज-ममु कालिदास बहुमन्यते । कीदृश गौरव कविप्रकाण्डे कालिदासे शास्त्रप्रवर्तकानामाचार्यपादानाम् । स्मृतितुल्यप्रमाणकाव्यनिर्माणधुरी-णस्य कालिदासस्य प्रसवित्र्या भारतीभूमेर्महिमा लोकसीमातिलङ्घिनीति सपिण्डितोयमर्थ ॥

श्रीमता शङ्कराचार्याणा २६३१ तमे यौधिष्ठिरे शकाब्दे अवतीर्णत्वेन सप्रति च ५०२७ तमस्य यौधिष्ठिरशकाब्दस्य प्रसिद्धत्वात् सुव्यक्त निर्णीयत एव इतः पूर्वं २३९७ वत्सरेभ्य प्राक्तनत्व महाकविकालिदासस्येति ॥

यद्यपि केचन आस्माकीने निर्णये प्रत्यवतिष्ठेरन् । पुरातन कालोपि क्रिस्तसमुत्पत्तिसमयसन्निहितेनेव भवितव्य इति राद्धान्तमुररी-कुर्वाणा, कलियुगारम्भश्च क्रिस्तीयवत्सरारम्भत १५०० वर्षे प्राचीन न तु ततोऽभ्यधिके इति काचन वाचोयुक्ति मनुसदधानाः, चतुर्युगानभ्युपगमेन पुरातनकालिकान्, माधातृ सगर नल नहुष कार्तवीर्य हरिश्चन्द्र राम ययाति प्रभृतीन् विस्मारयन्त अस्मदीयानपि काश्चित्कदध्वानि प्रवर्तयितुमुत्सहन्ते । न तेभ्यो वय बिभीमः ।

यतो वय प्रमाण परतन्त्राः, अप्रतिष्ठितयुक्त्याभासेष्वप्रविष्टान्तःकरण प्रवृत्तय युगादिव्यवस्थया महाकालस्य अखण्डत्व निर्णयन्त', तत्कुक्षि-प्रविष्टानि कानिकान्यपि वसतूनि जीर्णान्येवेति सभावयन्त , श्रुत्यादीना-मर्वाचीनविपाश्चित्परिकल्पिताक्रिस्तसमयसन्निहितवार्तित्वमनभ्युपगच्छन्त प्रस्थानान्तरमारभामहे । पुरुषमतीना वैश्वरूप्यात् एवमेव भवितव्यामिति न केनापि नियन्तु शक्यते । अत कालिदासस्य क्रिस्तीयषष्ठ शताब्द्या, सप्तमशताब्द्या, पञ्चमशताब्द्या वा सभूतत्वपरिकल्पन निरस्तप्रायम् । इदानींतना केचित् विचारचतुरा क्रिस्तीयचतु श्शताब्द्यामेव कालिदासस्य प्रादुर्भाव इत्याभिप्रयन्ति । रमेशचन्द्रदत्त-प्रभृतय विपश्चित क्रिस्तवत्सरारम्भात्प्राक् द्वितीयशताब्द्या अग्निमित्र समकालिक कालिदास इति उपन्यास्थन् । इत्येवपाश्चात्यविपाश्चित्परि-कल्पितपथानुवर्तिषु परस्पर वैमत्येन पक्षा समुत्क्षिप्तास्समीक्ष्यन्ते । मूलप्रमाणरहिता युक्ती केवलमाश्रित्य स्वपक्षोपक्षेपे युक्त्यन्तरेण ऊहदक्षेण पूर्वपक्षो व्युदस्यते । तेन च उत्प्रेक्षिता युक्ती रमणीयाऽपि ऊहकुशलेनान्येन आभास्यमाना लक्ष्यत इति सम्यक् निश्चय कदापि न सभवेत् । तदेतदुक्त हारिणा—

यत्नेनानुमितोप्यर्थ. कुशलैरनुमातृभि ।
अभियुक्ततरैरन्यै अन्यथैवोपपाद्यते ॥

इति । तथा 'निरागमा पुरुषोत्प्रेक्षामात्रनिबन्धनास्तर्का अप्रतिष्ठिता भवन्ति, उत्प्रेक्षाया निरकुशत्वात् । तथा हि—कैश्चिदभियुक्तै यत्नेनोत्प्रेक्षितास्तर्का अभियुक्ततरैरन्यै आभास्यमाना दृश्यन्ते, तैर-प्युत्प्रेक्षितास्सन्त ततोऽन्यैराभास्यन्त इति न प्रतिष्ठितत्व तर्काणा शक्यमाश्रयितु पुरुषमतिवैरूप्यात्' इति । अत प्रमाणसप्रतिपन्ना युक्ति प्रतिष्ठिता प्रभवति । प्रकृते च कालिदासस्य प्रादुर्भावसमयः श्रीशङ्करा-

चार्यात्प्राचीन इति निश्चीयते। प्रमाणपरतन्त्राणामस्माकं द्वारकामठे अद्यापि विद्योतमानं श्रीशङ्कराचार्येभ्यः सुधन्वभूपतिना समर्पितं ताम्रशासनं विद्यते। तत्र यौधिष्ठिर शक २६६३ तम समुल्लिखितं परिदृश्यते। ततः क्रिस्तीयशकारम्भात्पूर्वं पञ्चशताब्द्यां श्रीशङ्कराचार्याणां कुमारिलभट्टाचार्याणां च संभूतिः। ततः पूर्वं कालिदासस्य आविर्भावस्सुश्लिष्ट इत्यभिप्रेमः। कालिदासस्य क्रिस्तसमयात्पूर्वपक्षोपक्षेपे च विदेशीयमतानुयायिनः रमेशचन्द्रदत्तप्रभृतयः अस्माकमनुकूला इति सुधीभिर्न विस्मर्तव्यम्। यद्यप्यर्वाचीनाविपश्चितः क्रिस्तशकात्पूर्वं शकान्तरं नासीदेव। क्रिस्तशकादनन्तरकालिका शालिवाहनशकादयः प्रमाणप्रतिपन्ना इति निःशङ्कं स्वप्रतिभयोत्प्रेक्षन्ते। तेषां पक्षः समीक्षादक्षैः निर्वास्यत एव इति निश्चिनुमः। यतः शालिवाहनशकवत् शकान्तराणामपि सत्त्वे प्रमाणं प्रतीयते।

युधिष्ठिरो विक्रमशालिवाहनौ धराधिनाथो विजयाभिनन्दनः।
ततस्तु नागार्जुनमेदिनीविभुः बलिः क्रमात् षट् शककारकाः कलौ॥

इति। विक्रमशकस्य दाक्षिणात्येष्वप्रसिद्धत्वेपि औत्तराहैरनुस्रियत एव विक्रशकः। विक्रमार्कमहीपालः किल पराक्रमेणैव सर्वां महीं युधिष्ठिरवदाचक्रामेति पुरावृत्तविदो वदन्ति। शालिवाहनस्तु नर्मदायाः दक्षिणदेशे विक्रमशकं विलोप्य आभिनवं स्वीयं शकं प्रवर्तयामास। तावता शालिवाहनस्य विक्रमादिवत् सर्वविजेतृत्वं न सिद्ध्यति, किं तु क्रिस्तवत् शकप्रवर्तकत्वमेवेति विचक्षणा आचक्षते॥

"युधिष्ठिरो विक्रमशालि" इत्युपन्तस्तं प्रमाणं अप्रमाणमिति वक्तुर्वचने कथं प्रामाण्यं सिद्ध्येत्। येन वयं श्रद्दधीमहि। औत्तराहसिद्धविक्रमशकस्य पञ्चाङ्गादिष्वपि समुल्लिखितस्य अपमार्जने प्रवृत्तस्य पश्यतोहरस्य विप्रलम्भकत्वं सुस्थमिति न प्रत्येकं वदितव्यम्। विष्णु-

पुराणप्रामाण्यादपि अग्निमित्रस्य राज्ञ क्रिस्तसमयात्प्राचीनत्व सप्रतिपन्न-मवगम्सते । कालिदास खलु मालविकाग्निमित्रे भरतवाक्यमुखेन

आशास्यमीतिविगमप्रभृति प्रजानाम् ।
सपत्स्यते न खलु गोप्तरि नाग्निमित्रे ।

इति नाटकप्रथनावसरे आग्निमित्रस्य स्वसमयवर्तित्व प्राकाशयत् । इदानीमग्निमित्रो महीं त्रायते । तदवश्य च प्रजानामाशास्य सपत्स्यत इति तदीयो गूढाभिप्राय । विष्णुपुराणे च "पुष्पमित्र सेनापति स्वामिन हत्वा राज्य करिष्यति । अस्यात्मजोग्निमित्र तस्मात्सुज्येष्ठ ततो वसुमित्र " इत्यादि । एव च भारतवर्षसभृतस्य कालिदासकवि-कुञ्जरस्य क्रिस्तसमयात्प्राक्कालिकत्व असैत्सीदिति सप्रमोदमावेदयामहे ॥

तेन च महाकविना निर्मितेषु रघुवश मेघदूत कुमारसभवेषु महाकाव्येषु श्रव्यप्रबन्देषु, अभिज्ञानशाकुन्तल मालविकाग्निमित्रादिषु दृश्यप्रबन्धेषु च परिकर्मितव्यवहार रसभावालङ्कारादिभ्य समुल्लसित वैदग्ध्यप्रावीण्यादिक निपुण निरूपयामो यथामति ॥

अलङ्कारशिरोरत्न सर्वस्व काव्यसपदाम् ।
उपमा कविवशस्य मातेवेति मतिर्मम ॥

इति राजशेखरादिसमत्या सर्वत्र प्रथिता "उपमा कालिदासस्य" इति प्रथा च सर्वत्र वरीवर्ति । उपमापरिकल्पने च समुचित प्रसिद्धमुपमानादिक अनायासेनैव उपन्यस्यति महाकपिः । यथा रघुवशे वागर्थाविव सपृ-क्ताविति श्लोके पार्वतीपरमेश्वरयोरनाद्यो. नित्यसबद्धयोस्समुचितमुपमान "वागर्थाविव" इति पदेन समसूचयत्। शब्दार्थावित्युक्ते शब्दशब्दस्य-पुल्लिङ्गत्वात् पार्वतीनिरूपित उपमानत्व नश्लिष्टमिति "वागर्थाविवेति" परिकल्पितम् । वागर्थयो वैयाकरणवत् मीमासकैरपि "औत्पत्तिकस्तु शब्दस्यार्थेन सबध " इत्यादिना नित्यत्व नित्यसबन्धत्व व्यवस्थापितम् ।

तत्रैव द्वितीयसर्गे नंदिनीधेन्वनुसरणशीलाया सुदाक्षिणायास्समुचितमुपमान ' श्रुतेरिवार्थं स्मृतिरन्वगच्छत् " इति अभिहितम् । तत्रैव तृतीयसर्गे " निधानगर्भामिव सागराम्बराम् , शमीमिवाभ्यन्तरलीनपावकाम्, नदीमिवान्तस्सलिला सरस्वतीम्, नृपस्ससत्वा महिषीममन्यत " इत्यत्र शमीतरौ वह्निरस्तीत्यंश " शमीगर्भादग्निं मन्थति " इति श्रुतिसिद्ध ' ऋषयो वै सरस्वत्या सत्रमासत " इति ब्राह्मणभागप्रसिद्ध देवनदी सरस्वती म्लेच्छदेशेष्वन्तर्धाय भूय पुण्यप्रदेशेषु द्रवति इति स्मृतिसिद्ध विषय च अक्षुण्णश्रुतिस्मृतिशरणाना ग्रहणधारणपटूना स्पुट कवि पर्यचाययत् इति सुधियो विभावयन्तु । " तीर्थोदक च वह्निश्च नान्यतश्शुद्धिमर्हत " इति न्यायेन परमपवित्रवह्निनिरूपितसादृश्य गर्भस्थरघो परिकल्प्य अनन्तर " पुपोष वृद्धिं हरिदश्वदीधिते अनुप्रवेशादिव बालचन्द्रमाः " इत्यत्र

सलिलमये शशिनि रवेर्दीधितयो मूर्छितास्तमो नैशम् ।
क्षपयन्ति दर्पणोदरनिहिता इव मन्दिरस्यान्त ॥

इत्यादिज्योतिश्शास्त्रसिद्ध सूर्यस्य सुखनाम्न्या अमातकलाया नाडिकाया प्रवेशाच्चन्द्रो वर्धते इत्यश स्फोरयतश्च कवेः बुद्धिवैशद्य निरवद्यम् । चतुर्थसर्गे " आदानं हि विसर्गाय सता वारिमुचामिव " इत्यत्र सर्वस्वदाक्षिणाके विश्वजिन्नामके यज्ञे

पूर्वपुण्यविभवव्ययलब्धा. सपदो विपद एव विमृष्टा ।
पात्रपाणिकमलार्पणमासा तासु शान्तिकविधिर्विधिदृष्ट ॥

इति प्रतिपादितदिशा सत्पात्रविनियोगार्थं सता धनार्जनमित्यत्र समुचित जलदाना समुद्राज्जलग्रहण वृष्ट्य एवेति पयोदरूपमुपमान " सहस्रगुणमुत्स्रष्टुमादत्ते हि जल रवि " इति श्रुतिस्मृती अनुरुध्य सूर्योपमानवत् प्रादर्शयत् । तथा

कुलेन कान्त्या वयसा नवेन गुणैश्च तैस्तैर्विनयप्रधानैः ।
त्वमात्मनस्तुल्यममुं वृणीष्व रत्नं समागच्छतु काञ्चनेन ॥
शशिनमुपगतेयं कौमुदी मेघमुक्तं
जलनिधिमनुरूपं जह्नुकन्यावितीर्णा ॥
परस्परेण स्पृहणीयशोभं नचेदिदं द्वन्द्वमयोजयिष्यत् ।
अस्मिन्द्वये रूपविधानयत्नः पत्युः प्रजानां विफलोऽभविष्यत्
रतिस्मरौ नूनमिमावभूतां राज्ञां सहस्रेषु तथाहि बाला ।
गतेयमात्मप्रतिरूपमेन मनो हि जन्मान्तरसंगतिज्ञम् ॥

इति चतुर्षु श्लोकेषु यथाक्रमं कविनिबद्धसुनन्दा पौरजन पौरवधूवक्त्रकेषु अजेन्दुमत्योः परस्परसादृश्ये तिरूपणीये महानुभावस्याऽजस्य सुवर्णत्वं इन्दुमत्याश्च रत्नत्वं परिकल्प्य रत्नस्य काञ्चनेन योग इव तयोस्समागमश्श्लाघ्य इति प्रथमे श्लोके प्रतिवस्तूपमा . शशिनीति द्वितीयश्लोके तयोरेव दम्पत्योः शशिकौमुदीभ्यां जलनिधिजह्नुकन्याभ्यां च निरूपितं सादृश्यमवलम्ब्य निदर्शनाललितसंदेहमकरं , तदनन्तरश्लोकयोः सोपपत्तिकं रतिस्मरनिरूपितसादृश्यं सुव्यक्तं अभिदधानो महाकविः कीदृशं चमत्कारमावहतीति रसिकास्स्वान्ते सरसं संभावयन्तु । “मनो हि जन्मान्तरसंगतिज्ञमिति” तुरीयपादार्थं

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्
पर्युत्सुको भवति यत्सुखितोपि जन्तुः ।
तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तरसौहृदानि ॥

इति शाकुन्तले सम्यक्सरसं विवृतं । तथा हि लोके तत्तद्वैषयिकसुखमनुभवन्मानवः रम्याणि वस्तूनि साक्षात्कृत्य मधुरं गानं च श्रुत्वा उत्कण्ठितो भवतीत्येतत् जन्मान्तरानुभूतवस्तुसंस्कारवशात् अबोधपूर्वं स्मरे-

नूनम्, इति दुष्यन्तोक्तिं योगशास्त्रमर्यादया दृढीकरोति कविः। तथा हि योगसूत्र (४-४) "ततस्तद्विपाकानुगुणानां अभिव्यक्तिर्वासनानाम्" द्विविधा वासना स्मृतिफला जात्यायुर्भोगफलाश्च। जात्यायुर्भोगफला एकानेकजन्मभवा इति पूर्वमेव कृतनिश्चया। यास्तु स्मृतिमात्रफला ततः कर्मण अन्यादृक्शरीरमारब्ध, देवमनुष्यातिर्यगादिभेद तस्य विपाकस्य या अनुगुणा अनुरूपा वासना तासामेव वासनानां तस्मादभिव्यक्तिः। आसामेव वासनानां कार्यकारणभावानुपपत्तिमाशक्य समर्थयितुमाह—"जातिदेशकालव्यवहितानामप्यानन्तर्यं स्मृतिसंस्कारयोरेकरूपत्वात्" इति। इह संसारे नानायोनिषु भ्रमन्त काचिद्योनिमनुभूय योन्यन्तरसहस्रव्यधानेन यदापुनस्तामेव योनिं प्रपद्यन्ते तदा तस्यां पूर्वानुभूताया योनौ तथाविधशरीरादिव्यञ्जकापेक्षया वासनाः प्रकटीभूता आसन्, ताश्च वासना • तथाविधव्यञ्जकशरीरादिलाभे प्रकटीभवन्ति। कुत स्मृतिसंस्कारयोरेकरूपत्वात्। तथाहि अनुष्ठीयमानात्कर्मण चित्तसत्त्वे वासनारूपास्संस्कारास्समुत्पद्यन्ते। संस्कारात् स्मृतिः स्मृतेश्च सुखदुःखभोगः तदनुभवाच्च पुनः संस्कारस्मृतयः इत्यनादित्वं तासाम्। कथमनादित्वमिति आशक्याह "तासामनादित्वं चाशिषो नित्यत्वात्" येयमाशीर्महामोहरूपा सदैव सुखसाधना मे भूयात्, तैर्वियोगः कदापि मा भूदिति संकल्पविशेष स वासनानां कारणमिति तासामनादित्वम्, इति योगशास्त्रप्रसिद्धः दुरूहः विषयः शास्त्राभ्यासविमुखानामपि सुकुमारमतीनां बालानां यथासुगमं स्यात् तथा रमणीयन्यासेन काव्ये प्रत्याययति कविरित्यहो कालिदासस्य अभिज्ञता लोकातिशायिनी॥ इति॥ (क्रमशः)

---

[संस्कृतभाषया तत्रापि छन्दोनिबद्धयोपलभ्यमानं वाक्यजालं सर्वं निरपेक्षकण्ठरवलक्षणा अगमाभिधाना श्रुतिरित्यास्माकीनानामभिप्राय इति भाति॥ सं]

## वर्णाश्रमधर्मः

सर्ववेदान्तसिद्धान्त गोचर तमगोचरम् ।
गोविन्द परमानन्द श्रीपतिं प्रणतोस्म्यहम् ॥

भो भो महाशया ! सुविदितमेवैतत् तत्रभवता यत् भारतवर्षीयाणा वर्णाश्रमधर्मो नाम अनादिपरम्परा समासादित अनितरसाधारणो महान् दायभूतो निधिरिति । स च अधुनातनै कैश्चित् तन्महिमानमजानद्भि तत्प्रतिपादकशास्त्रविधुरै केवललौकिक भोगस्पृहा कर्दमसदूषितमतिभि अन्तिमयुगजनाधिपै नितरामवधीर्य असत्प्रायतामापिपादयिष्यत इति च विजानन्त्येव विमर्शका । एवमेकत्र मिथ्याजनाधिपै अपरत्र क्रैस्तवादि बहिर्जनैश्च सन्दर्शितोय वर्णाश्रमधर्म नीतिनिर्माणसभायामपि शर्म अलभमान तत्राधिकृतैरपि तिरस्कृत. सनातनधर्मसभायामेव अभयमपेक्षते । तस्मादस्माक तद्रक्षणसरभ प्राप्तकाल एव ॥

### अस्थानासूया

अयमप्यचिरनिर्वृत्त कश्चनातिक्रम श्रुतिपथमधिरूढ एव स्यात्तत्रभवताम्, यदसूयापरै कैश्चनानाभिज्ञै भगवत्या मनुस्मृते द्वित्राणि सपुटानि भस्मीकृतानीति, अमु चातिक्रम सहृदयास्सर्वेपि दुस्साहसतममेवेति दूषयेयुरेव । अथापि तेषामज्ञानविजृम्भणमवलोक्य अनुकम्पार्द्रचित्तास्साधव तादृशाद्दुरुत्तरात्पाप्मनस्तान् विमोचयितु भगवन्त प्रार्थयेयुरपि ॥

---

अय च मद्रपुर्याम् अखिल भारतवर्षीय वर्णाश्रम धर्ममहामण्डले अग्रासनाधिकृतै श्री॥ उभय वे॰ नडादूर् श्रीनिवासाचार्यै. बि ए् बि एल् आङ्गलभाषाया प्रवर्तितस्य उपन्यासस्य सग्रहः ॥

महाशया' !

नतावत् केषाचिन्मनुस्मृतिकोशाना विनाशमात्रेण चिरतनस्य धर्मकल्पतरोर्हानि स्वप्नेपि सभावयितुमर्हतीति मम दृढतरो विश्वास ॥ अथापि—

' दुर्मुखो दर्पण दृष्ट्वा नासिका कुपितोऽच्छिनत् ' ।

इति न्यायेन असूयापरवशनाम् अकार्यप्रवृत्तिरात्मनि श्रेयसमेव हिनस्तीत्यावेदयितुमेवास्माभिस्तत्प्रसग आहृत ॥

अत एव च रहस्याम्नाये असूयामूलानामापदा प्रकार बहुधा प्रपञ्चित', यथा—

"ज्ञान ज्ञापन सप्रेषण कर्मा ब्राह्मण । ज्ञान परित्राण कर्मा-क्षत्रिय । ज्ञानबीजवर्धनकर्मा वैश्य । ज्ञानपर्युत्थानकर्माशूद्रः । कृतयुगस्यान्ते त्रेतायुगस्यादौ ब्राह्मणक्षत्रियवैश्यशूद्रा भिद्यन्ते । तेषा भिन्नाना दृष्टि न तथा भवति । पृथ्व्यारसा न तथा भवन्ति । पुष्पफलमोषधिवनस्पतयो न तथा दधते । तान् दृष्ट्वा ब्राह्मण क्षत्रिय वैश्य शूद्राणा असूया प्रादुर्बभूव । शूद्र प्रथमजाति न व पर्युत्थास्यामीति । वैश्यो द्वितीयजाति· न वो बीजानि वर्धयिष्यामीति । क्षत्रियस्तृतीयजाति न व परित्रास्य इति । तान् ब्राह्मण इत्याह । आस्थिता यूय न वो वक्ष्यामीति ॥ " (भगवद्गीताभाष्यतात्पर्यचन्द्रिका १८-४४)

एतया च वर्णनया असूयैव केवल अन्योन्यवैरजननद्वारा सर्वासामेवापदा आदिमो हेतुरिति प्रतीयते किल । ईदृशयिमसूयाप्रभवा दुर्दशा तावत् अधुनाऽमु भारतवर्षमामूलाग्रमाक्रमितुमरभते इति तादृशीं दुर्दैवतामसूया व्यपोहयितुमस्माभि· सर्वैरप्यैकरस्येन प्रमथत प्रयतितव्यम् । तद्दूरीकरणे वर्णश्रमधर्मानुकरणमन्तरा न कोप्यर्थ· उपकरणभाव लभेतेति स एवास्माभिस्सर्वैरपि शरणीकरणीय ॥

धर्मप्रभावः ॥

एष च वर्णाश्रमधर्म अनादे कालात् अस्मद्देशीय महाजनानाम् अनवधिकमानुकूल्य सम्पादयन्नभिवर्धित इति एतत्सार्वजनीनम् । विशेषतश्चास्मद्देशीयानामय धर्मः अचचलमनुत्तमाचार्थसिद्धिं समर्थयन् अखिलानपि मानवान् अन्योन्यहितैषणापूरित हृदयानेव वर्तयन् अद्यावधि अविच्छिन्नस्वरूप एव दरीदृश्यते । अस्यैव महिम्ना सन्तुष्टम्सुखभरितश्च शूद्रसमुदाय , वार्तया वसुनाच समृद्धो वैश्यसघ , पाराक्रान्तो गभीरहृदयश्च राजन्यवर्ग सन्यासिनस्सन्मार्गदर्शिनश्च ब्राह्मणा इत्येते सघीभूय सनातनधर्मस्य साक्षान्मूर्तिरिव अन्योन्यानुकूल्येनाभिवर्धन्ते । अमुमेवार्थं प्रशसति सर् जार्ज् बर्ड्वुड् (Sir George Birdwood) इत्यभिहितो अस्मद्देशाभिमानी कश्चिदागिलमणि । यदाह वर्णाश्रमधर्मानुसारिणा कृषीवलाना प्रस्तावे, सम्भूयसमुत्थानम् तन्मूलफललाभ च प्रशस्य, "अद्यापि ऐरोप्यजनमनोविदूर भारतीय महाजनैकान्तप्रतिष्ठ व्यवसायिसमूहमनोरथपूरणप्रकार मन्वादयो महर्षय स्वय निर्णीय चिरात् पूर्वमेव निबन्धयामासु । न तदानीमभिवृद्धजनसमूहेषु ऐरोप्याणा परिगणनापि सभावनीया आसीत् । नतावत् कृषि केवल जीविकामात्रतया तै परिगृहीता । किंतु आत्मनिश्रेयस साधारणसाधनत्वेनापि । तथाविध च उद्बोधमुत्पादयामासुरुद्बुद्धास्ते ब्राह्मणा महर्षय । अत एव च भारतवर्षे प्रभुभृत्य मात्सर्यादि दोष विनैवाद्यावधि आन्तरालिक क्षात्रवैश्यधर्मवैकल्य दशास्वपि स्वयमप्रतिबद्धैव कृषिरूपा वृत्तिर्वरीवर्ति । नहि द्वीपान्तरीय विग्रह वाणिज्यादिभि क्षत्रवैश्यधर्मयो सप्राप्ता उपहतिरपि कृषिरूपा वृत्तिम् तत्रास्पृशत् । ईदृशीं भारतीयमहाजनमहानन्दजननीं मन्वादिमहर्षिप्रवर्तित धर्मानुसरणपद्धतिं अवलोकयतां आगिलमहापुरुषाणा भारतीयमहाजनेषु अनिवार्या

प्रीतिस्स्वयमेवाभिवर्धते इति अनुश्रूयतेस्माभि. परसुखसुखित्वरूप परम-पुरुषार्थः" इति ॥

सहृदया ! एता सनातनधर्मानुष्ठानपद्धतिं अभिजानता मेषा स्वात्मैकप्रयोजनाय केवल जनतापमुपयुजता पाश्चात्यानामनुष्ठानरीति-मपेक्ष्य सहस्रकृत्व. श्लाघनीयासेत्ययमर्थ सर्वात्मना प्रतिभासेत । पश्यत कियदिदमन्तरमनयोरिति—यत् स्वप्रयोजननिर्वर्तनाय जनतोपरोध जनतानन्दसन्दोहनाय स्वात्मसमर्पणमिति च । यावता कालेन च नास्पृश-दय पाश्चात्यजनाचारो भारतवर्षं तावन्त काल शान्तास्तुष्टा परोप-कारैकनिरता' परमात्मपराधीना तद्गतसकलसतोषाश्च समभवन्नस्मत् पूर्वपुरुषा । ईदृशीञ्चास्मत्पूर्वपुरुषाणा अभ्यर्हणीया स्थितिम् सार्व-जनीनामापादयितु अभिलषति 'सेण्ट् अगस्तैन्' नामा पाश्चात्यमुनि , यदाह—' एष एव जनसमूहस्य श्लाघनीया गुणराशि । यत्परमेश्वरेण स्वानुगुण प्रसाधिता पदवीमासाद्य तस्यामेव स्थैर्यं सम्मान सन्तोषञ्च सर्वे सलभन्ते । यत्समूहावयवात्मा नकश्चिदपि परेषामौन्नत्य तदधीना मानना तद्गता भोगसमृद्धिं चासहमान' प्रद्विषति । यत्र च सकल-मपि वस्तुजात सर्वेश्वरावास्यमिति तन्मयमेव निखिल प्रपच भावयन्ति भावुका. । यत्र च परप्रयोजनैकफलैरुद्यमैर्नवनवमेवातन्वन्ति आध्या-त्मिकाधिभौतिकानन्दसमृद्धिं अभिजनवरेण्या " इति । किं बहुना—बर्ह्बुड् प्रोक्ता इयमुक्तिरेकैव वर्णाश्रमधर्ममहिम्न परां काष्ठामावेदयति । यथा ।

"भारतो भारतस्तावद्यावद्वर्णाश्रमस्थिति ।
यदैष त्यज्यते धर्म तदा त्यक्तास्य हैन्दुता ॥" इति ॥

### भारतस्वरूपस्थिति

परमर्षि परिष्कृतेयं सर्वोपद्रवनिवारिणी वर्णाश्रमधर्मसरणि भार-तीयानामैक्यरूप्य लौकिकाध्यात्मिकवृत्तिं तदनुगुणानात्मगुणान् द्वन्द्व-

सहताम् इत्येतानितरांश्चानितरसाधारणान् धर्मान् वर्धयित्वा परराज विग्रहनैष्ठुर्यात् अन्तश्छिद्ररन्ध्राच्चागमिष्यन्तीमापत्सततिं सन्निवार्य भारत-स्वरूप समर्थयन्ती समभिवर्धतेस्म । श्रुतचरमेव भवता क्रैस्तवसप्तशत्या-आरभ्य वर्षाणा यावत्सहस्र कठोरास्तुरुष्का अस्मद्भारतभूमिं बहुधा समुपाद्रवन्निति । यदि च वर्णाश्रमधर्मानुसरणश्रद्धाऽस्मदीयाना ना-भविष्यत् तदैतावता कालेन मुषितनैजरूप तुरुष्कप्रायमेवेद भारतमहा-मडल अभविष्यत् । अद्यापि शिथिलावशिष्टापि तच्छ्रद्धैवास्मान् सरक्ष-तीति अत्र नसशय लेशोपि । देशीय वादिभिरालक्ष्यमाण स्वराज्यमपि समर्थयितु वर्णाश्रमधर्मपद्धतिरेव समर्थेति यत्सत्य वय श्रद्धाम । असूया मदमान मोहनादीना आमयानामपि इयमेव दिव्यौषधमिति च धीरतर वदामः । तस्मात् भारतमातुश्शुश्रूषामभिलषद्भि सर्वैरपि मनीषिभि वर्णाश्रमधर्म सरणिरिय सर्वात्मनानुसरणीया अनुसारयितव्याचेति बहुतर प्रार्थयाम । यतश्च वर्णाश्रम धर्मसगता अनितरसाधारणी शक्ति भारतीयाना तदनुगुणा नैसर्गिकी चित्तवृत्ति 'सत्यमेव जयति नानृतम्' इति उद्घुष्यमाणा औपनिषदी वाक्प्रवृत्तिश्च मिलित्वा मतिमारूढा अस्मान्नितरा प्रोत्साहयति । अतो मानवमात्र-साधारण मदमान मुख विगुण विरोध भिया विरता भवेमेति च विशेषतो विज्ञापयाम । भ्रातर ! सहभवामः । सौभ्रात्र समूहसेवा च सर्वत्र सहृदय प्रकाशयाम । आर्यया मत्या अनार्योचितान् जनान् जेष्यामः । अज्ञानात्तै. परित्यक्त तदीय सनातनधर्मफलदायाश तेभ्य-स्समर्पयाम. ॥

## धर्मशब्दार्थ

तदैव खलु धरणार्थ धातुनिष्पन्नस्य धर्मपदस्य याथातथ्येनार्थे-मभिज्ञायानुष्ठानकृतो भवेम । नखलु ऋते वर्णाश्रमधर्मात् समूह समा-

धानसमुचितहेतु किंचन साधन कुत्रापि दृश्यते । सर्गादावेवाय धर्मे सृष्टिकृता जगत्स्थितये विनिर्धारित । प्रवर्तितश्च धनिक दरिद्र प्राज्ञ पामर बलाढ्यदुर्बलाद्युच्चावच विभेदजुषा मानुषाणा प्रतिनियत स्वभावमवलोक्य देशकालपुरुषभेदानुगुण विभिन्नरूपत्वेनापि । यदिचाय धर्मसेतुर निबद्ध स्यात् तर्हि मात्स्यन्यायेन मानव समूहमपि समाक्रम्य बलवत्कबलितास्सीदेयुरेव दुर्बला इति का कथा समाश्वासस्य ? नीतिवर्त्मानुवर्तनस्य वा ? ।

अपि च लोकदृष्ट्या उच्चावचनीचोच्चभावबुद्धिसमुत्पादनार्हा अपि चातुर्वर्ण्यधर्मा इमे अनुसहित सर्वान्तर श्रीभगवदाराधन स्वभावास्सन्त सर्वेष्वपि वर्णेषु साम्य बुद्धि समर्पयन्त नीचक्रियाचरणमूला इतरजनावधीरणा आत्मन्यसन्तुष्टिम् वाऽपनयन्तः सर्वानपि मनीषिणस्समरसीकुर्वन्तीति महानयमेतेषा महिमा । नहि अस्मच्छरीरावयवेषु गच्छतीति चरणोऽवज्ञायते ? आदत्त इति बाहुर्बहुमन्यते वा ? । सर्वेष्वपि तेषु तत्तत्स्वरूपानुगुणमेव कर्म समर्प्यते । अत एव च सत्वप्रधान ब्राह्मण प्रवचनार्हमिति कृत्वा परमपुरुषमुखसमुद्भूत, क्षतिकर्तृच क्षात्र बाहुजात, सवेशनार्ह विश ऊरुजात, परिचरन्त चतुर्थ श्रीभगवच्चरणारविन्दावतीर्ण च उपवर्णयन्ति श्रुतय ॥

नहि सर्वस्मिन् जगति ब्रह्मस्वरूपदृष्टेरन्यत् अन्योन्यानुकूल्यनिधानं विभावयितु शक्यते । अनादिसिद्धोय वर्णाश्रमधर्मविभाग । नैव केन चिदर्वाचीन सकेतेन परिकल्पित । ऋग्वेदेपि अयमति प्राक्तनतया प्रकीर्तितो दृश्यते । तत्रैव च ब्राह्मण्यादिजातिर्जन्मसिद्धै-वेत्यप्यनिर्धारि । मन्वादयश्च स्मर्तारः जन्मसिद्धामेता चातुरात्मिका जातिमेव वर्णत्वेन पर्यगणयन् । इतराश्च जातिभेदान् सकीर्णान् निरदिशन् । भक्तिसारोपि स्वयमवर्णी सन् एतान् चतुरो वर्णानेव

(कुलगलाय वीरीरण्डु) इति कुलशब्देन बहुमेने। महर्षयश्च सर्वेषां वर्णिना मवर्णिना चानुरूपानेव धर्मान् समादिशन्। तथाहि मनु-स्मृत्युपोद्धाते॥

देशधर्मान् जातिधर्मान् कुलधर्मांश्च शाश्वतान्।
पाषण्डगणधर्मांश्च शास्त्रेस्मिन्नुक्तवान् मनु ॥ इति ॥

एव स्वस्ववर्णाश्रमधर्मनियत धर्मानुष्ठानमेव कर्मयोग इति व्यपदिश्यते। एतस्य कर्मयोगस्य फलनिर्वर्तनप्रकार एव निरणैषि— अपनेतव्यौच सर्वानर्थ हेतू कामक्रोधरूपौ रिपू। निर्णेतव्य शरीराति-रिक्तात्मस्वरूपयाथार्थ्यम्। सत्वादिगुणत्रयकार्याणि चाकलनीयानि। परिहरणीय च विषयोन्मुखाना इन्द्रियाणा पारवश्यम्। भेतव्यच पापा-चारफलींभवतो रौरवादि नरकपातात्। अभ्याससपादनीया च औन्नत्य-दायिनी मनसश्शुद्धा भावना। क्षुद्रफलाभासनिरपेक्षमेवानुष्ठेयानि स्वरूपानुरूपाणि कर्माणि। अनुष्टितैरेतैराराधनीयश्चाखिलजगदन्तर-स्थित सुरासुरनरवरहृदयकुहरावासो रमानिवास। अधिगन्तव्य च तच्चरणारविन्दसेवा समुदूत मोक्षाभिलप्य अनवधिकानन्दफलमिति॥

## सर्वसमत्वम

महाशया.! सहृदया! इत्येव विनिर्धारिते वर्णभेदे तत्र का कथा उत्कर्षनिकर्षादिसघर्षस्य? यतोहि भगवदवयवभूतास्सर्वेपि वर्णा। अपिच एतेषु वर्णेषु मुख्यामुख्यविचारोवा कथ प्रसज्येत? नहि शिर पाण्यादिषु पुरुषाशेषु अमुक एवाश्यक नेतर इति कश्चिद्विचक्षण आचष्टे। न च पाणिवदादातु पाद' प्रभवति। तद्वदभिगतु च पाणि। अभ्यर्हणीया एव सर्वेप्यवयवा यदि तत्तदुचितक्रियाकरणकुशलाः॥

न च कार्यविशेष निर्वाहादि निमित्तमुपधीकृत्य परिकल्पित नीचोच्चभाव वस्तुषु स्वाभाविकोत्कर्षापकर्षावपि समर्पयितु प्रभवेत्

नहि सभासु भासमान प्राड्विवाकसभाध्यक्षादि विभेद विहारदेशेषु तेषां सर्वेषामपि साधारण्यमुपरुणद्धि ।

समूहात्मकस्य महायन्त्रस्य अवयवभूता एवहि सर्वे वर्णा॰ । एषु चान्यतरप्रमोषेपि मुषितप्रवृत्तिरेव भवेदय महायन्त्र इत्यपि किमु वक्तव्यम् ॥

### वर्णाश्रमधर्माणा नियमनैकरूपत्वम्

अपिच यथोचित वर्णेषु विभज्य समर्पितास्सर्वेपि वर्णधर्मा स्वविधिपरवशानेव तानधिष्ठाय सेवकीकुर्वन्ति केवलम् । नहि मात्रयापि ऐहिकभोगाद्यधिगमे कस्यचित् कोपिवर्णधर्म विशेषत स्वामिता मापादयति । यतस्ते भोगाधिकारा धर्मपथविदूरा । परतु एतावदेवात्र नियम्यते । यत् भोगातुरतयाऽसूयामदमानमोहादिपाशविवशा पशवो माभूवन्निति । दयादानदमशमादि परिकर्मितान्तरगा स्वच्छन्दा विहरेयुरिति च । एव विभज्योपपादितेषु वर्णधर्मेषु समुदाय क्षेमसपादकाप्रधानतरा प्रयासनिर्वाह्याश्च बहवो धर्मभरा॰ विप्रमूर्धस्वेव सामारोपिता । एतदेव परमुपधीकृत्य तेषु किंचित् व्यपदेशसपर्यादिकमुपदिश्यते । अभ्युपगम्यते च सर्वैरपि मनीषिभिस्ताद्विप्रकृत महोपकृतेस्स्वल्पमेवेत्यपि । आचर्यते च तदद्यावधि विधिनिषेधशास्त्रानुसारिणि महनीयजनुषि भूसुरे ॥

अथापि उत्पथप्रवृत्ते विप्रब्रुवे पर महर्षय॰ अणुमात्रमपि नकरुणामकुर्वन् । प्रायश्चित्तव्यपोह्यानामपि केषाञ्चित् पाप्मना ब्राह्मणगामित्वे परं निष्कृतिर्नास्तीत्यपि निर्धारयामासु ।

तुरीय वर्णेषु व्रतोपवासादि नियमविशेषनिषेधोपि तत्स्वभाव प्रापितधर्मोपरोधो माभूदिति सौमनस्येनैव प्रवर्तित । अतो नतत्रावज्ञा पक्षपातादि दोषशका अवकाश लभते । नहि स्वभावाननुरूपस्य कस्यचिदन्यस्य धर्मस्याकरणमात्रेण तेषा ऐहिकस्यामुष्मिकस्य वा

फलस्य लेशतोपि विनाश उत्प्रेक्षितु शक्यते । स्वानुरूपधर्मानुष्ठानेनैव सर्वार्थसिद्धे' । प्रपञ्चितश्चायमर्थ पुराणरत्ने—

'धर्मोत्कर्षमतीवात्र प्राप्नोति पुरुष कलौ ।
अल्पायासेन धर्मज्ञा. तेन तुष्टोस्म्यह कले ' ॥

इत्यारभ्य—

'निजान् जयतिवैलोकान् शूद्रो धन्यतरस्ततः'

इत्यन्तेन । एषैव रीति क्षत्रियवैश्ययो धर्मविशेषविधिनिषेधादिष्वपि समाकलनीया ॥

गुणाधीनजातय

एषा वर्णपदाभिलप्या जन्मसहभूर्ब्राह्मण्यादि जातिस्तावत् आशरीरविमोक्षणादनपायिनी भवेदेव । अथापि अहिंसासत्यास्तेयशमदमाद्यान्तरगुणोपचयाधीना मानसी ब्राह्मण्यादिजानिः पर वर्णिनस्सर्वानपि समाक्रामेदित्येतन्मात्र महर्षयो न व्यस्मार्षु. । यतस्तादृशी च मानसी जातिश्शास्त्रेषु प्रतिपाद्यते बहुश । जनिमात्रेण विप्रतामधिगतो विपरीत वृत्ति विप्रब्रुवस्तु क्षिप्रमेव विनश्येदित्येतदपि निराटक प्रकटीक्रियते । याच जन्मसिद्धा जाति याच गुणाधीना अनयोरन्योन्यानुपरोधेनैव स्वस्वानुरूपवृत्तविशेषा प्रयोजनभेदाश्च बहुधा उपवर्णिता दृश्यन्ते । उपलभ्यन्तेचाधुनावधि द्वयमपि वृत्त तन्निर्वृत्त फलच विपुलम् । अभिलषन्तिचैता नियतिं सहृदयास्सर्वेपि वर्णिन । अनातिलघनीयश्चायमर्थः शास्त्रप्रामाण्यमभ्युपगच्छतामभिज्ञानाम् । अत्रच जातिसिद्धो धर्म आप्रायणमपरित्याज्य एव । गुणकृतजात्युत्कर्षस्तु जन्मसिद्ध धर्ममबाधमान एव प्रामाणिकजनबहुमान भगवत्प्रसादभूयस्त्वादिषु निदानी भवति ॥

जन्मब्राह्मणगता शमदमादिगुणोपरोधिनी मानसी विपरीतवृत्तिश्च, अधिगम्यच प्रकृष्टगुणमहिष्ठमभिजन्म हन्त प्रच्युतोय प्रचुरफललाभादिति, साधुभिस्सुतरा गर्हणीयतामापादयति । जनित्वाच

जात्यान्तरे यदि विशुद्धवृत्त्यादिगुणोत्तरो भवति, प्रशसन्तिच त अन्यादृशमेव 'त देवा ब्राह्मण विदु' रिति। अनघजन्मनस्तस्य जातिसामान्येन वीक्षणमपि निरयगमनायैव भवेदित्यपि मान्यते तन्महिमा। श्रूयतेच इतिहासनिबन्धेषु अनार्यवृत्तेरार्यस्य आर्यवृत्तेरितरस्यच निकर्षोत्कर्षौ। पूज्यन्तेच शठकोपप्रभृतयश्शुद्धसत्वा। आवधीर्यन्ते चाऽग्र्यजन्मानोपि व्युत्पथप्रवृत्ता.। यदि तावत् जातिकृतो गुणकृतोऽवायमपकर्ष स्वाश्रयचेतनेन सम्यगनुसहित. ससार गर्तादुद्धर्तुं समुचितोपाय विशेषावलबने नियोजयेत् तदा एष एवापकर्ष निरतिशयपुरुषार्थावाप्तिसाधनता गत उत्कर्षरूपतामेवापद्येत॥

आर्यमिश्रा! इत्येषा वर्णाश्रमधर्म नियमाना समस्तजननिवहसुखावहा पारमार्थिकी रीति याथातथ्येन यद्यवगता भवेत् तदा तद्विषयिण्य आधुनिकाना असदृश्यश्शका दूरोत्सारिता भवेयु। ते किल तद्विषये एव सशेरते। केचित् वर्णाश्रमधर्म पद्धतिं ऐहिकाभिवृद्धे विरोधिनीमेवाभिमन्वते। परेच सर्वत्रापि वैरस्यहेतुमेता मन्यन्ते। अन्ये च जातिविशेषस्य अतिशयाधानाय कल्पितामेतामाचक्षते। इतरे च स्वाराज्यसिद्धिमुपरुणद्धीतीमा उपालभन्ते। अविचारितरमणियानीमानि वचनानि धर्ममर्मानभिज्ञतयैव समुदीर्णानीत्यपि किमुवक्तव्य?। निपुणं निरूप्यमाणे उच्छृखलवृत्तीना विधिनिषेधवचस्सु प्रद्वेषातिशय मूल एव प्रादुर्भूतेय असमीचीन वाग्विषवल्लरीति कथनमपि नाधिकोक्तितामावहेत्। प्रायश परोत्कर्षासहनमेवात्र निदानभाव मापद्यत इत्यपि अनलीकमेव। विशेषतश्च यथेच्छाहार विवाह करणकौतुकिभिरेवाक्षिप्यतेय वर्णाश्रमधर्मनियम इति प्रात्याक्षिकमेतत्। न तावद्वर्ज्यावर्ज्य विशेषमन्तरा अभ्यवहारादि अन्योन्य सौहार्दाभिवर्धनमहामन्त्रः स्वाराज्य साधनम्। येन तयोरभिकाक्षयापि तदगीकुर्मो वयम्। इत्यलमसमीचीनमार्गसमीकरणायासेन प्रकृतमनुसराम॥

## अस्मत्कर्तव्यम्

एतावदेव वर्णाश्रमधर्मिभि रवश्यकरणीयोऽर्थ । यदनादिसिद्ध वर्णाश्रमधर्म महापथ अधिरुह्य तत्र सचरणमुपरुन्धानान् कण्टकानालोक्य तेषा समूलोन्मूलनमिति । यद्यपि कार्त्स्न्येन वर्णाश्रमधर्माणामनुष्ठानमद्यतनैरस्मदादिभिरशक्यसभावनमिति नाविदितमस्माकम् । अथापि एतावदेव वयमभिलषाम । यदनादिपरपराप्राप्तस्य धर्मपर्यायस्य महतो दायधनस्य सारतमाश समादरणेनापि आत्मान कृतार्थी कुर्म इति ।

ज्ञानानुष्ठान परिमण्डिता पण्डितवरा बहव अस्मत्प्रार्थनामगीकृत्य एतन्महासभामलकुर्वन्ति । नीतिनिपुणा मेधाविनश्च बहवोत्र परिदृश्यन्ते । मिलितेनैव वर्गद्वयेन कर्तव्यमखिल सुष्ठुकृत भवेत् । यथा च वर्णाश्रमधर्मकल्पतरोर्नाल्पमपि मूलमुच्छिद्येत, यथा च अनितरनिवार्य परिवर्तनस्य कालाख्यस्य महत चक्रस्य गतिरपि न नितरामुपेक्ष्येत, तथा ताटस्थ्यमवलम्ब्यैव समर्थनीयोऽयमर्थस्स्यात् । नैवचास्मिन् समये शवमुष्टिनयात गृहीतग्राहिभि सर्वनियमोल्लघन कुतूहलिभिस्साहसिकैर्वा स्वल्पमपि साधुकारित स्यात् ॥

यद्यपि परमर्षिप्रणीतासु बह्वीषु स्मृतिषु एतेषा वर्णाश्रमधर्माणा अनुष्ठानप्रकारभेदा बहुधा उपदिश्यन्ते । कासु चिदनुष्ठापनप्रक्रियासु विरुद्धमतय इवापि दृश्यन्ते ते महर्षय । तथापि तत्रापातत प्रतीयमानो विरोधस्तावद्विनाप्यन्यतमबाधमखिलानुगुण वाक्यार्थवर्णनया निरसनीय । क्वचनानिवार्यतया प्रादुर्भवन्नपि विरोध देशकालाद्यनुसरणमूलतया परिहरणीय । नहि सुदूरान्तारितविभिन्नकालोद्भवाः स्मृतय सर्वा अपि धर्मप्रमेयेषु सर्वेष्वपि ऐकरूप्यमवलबितु अर्हन्ति । तत्र दैशिककालिक पुरुषशक्तीना विभेदात् । तादृशे चासुलभनिर्णये

धर्मतत्वे अद्यतनैरस्माभि पूर्वतर शिष्टजनाचार एव शरणीकरणीय । तन्मूलानिच शास्त्राणि समादर्तव्यानि । नतूच्छृखलवृत्त्या सर्वेषामपि प्रमाणवचनाना तावन्त व्याजमवलब्य परित्यजनम् । आपूर्वपुरुषादद्यावधि अनुष्ठीयमानाचाराविरुद्ध प्रमाणानुसरण वा शोभन भवेत् । शास्त्रप्रामाण्यस्य उन्मूलनमभिलषता हि दुष्कृत तत् । एतेन आचारपरिष्कारकरण व्यपदेशभाजा विजृभणमपि व्याख्यातमेव ॥

आर्या !! इदचात्रानुसधेयम्—यद्वर्णाश्रमधर्मानुसारिभिरस्माभि अधीति बोधाचरण प्रचारणै विरोधनिरसनैश्च अय सनातनो धर्मस्सरक्षणीय इति । एष एव परमोद्देश अस्य सनातनधर्म महामण्डलस्य । नैवचाद्यतन मनोरथान्यनुसृत्य नूतनसिद्धान्तसरणि निर्माणचातुरी !

महाशया ! अद्युनातनाः सात्विक जना बहवस्तावद्वर्णाश्रमधर्मभेदाना निष्ठा स्वरूप अनितरफलबाधेन तदनुष्ठानरीतिं च अजानन्त स्तदभिज्ञानाय धर्मतत्व निरूपणपरमुपदेश आचरणस्य मार्गावेदनं चाभिकाक्षन्ते । एत चाभिलाषमय महामण्डलः एतदीया पण्डित परिषच्च मिलित्वा पूरयेतामिति सप्रत्ययमाशास्महे ।

अपि चायमर्थस्सुतरा समर्थनीयः । यत् अस्मत्सनातनधर्मनिर्मूलनपराणां तत्कृते नीतिसभाधिकारकुद्दालमुपकारणीकुर्वता अनुकूलविभ्रमेण परमं प्रतिकूलमेवाचरता सनातनधर्म श्रद्धालुजनमनोव्यथामेव जानता आचारपरिष्कार कोलाहलस्सर्वात्मना निर्वापणीय इति ॥

## आचारप्राधान्यम्

विशेषतश्चाद्य शास्त्रीयाणां स्नानादीना सर्वेषामप्याचाराणा यथार्हमाचरणे यथा च सर्वेपि वर्णाश्रमिणस्सादरा भवेयु' तथा प्रयत्य सर्वमानवबुद्धिप्रवृत्तय. सत्पथैकवर्तिन्य करणीयास्समाजेनानेन ॥

नहि मतिसौष्ठवे तदधीनमगलोद्यमे च वर्णाश्रमधर्माचारव्यतिरेकेण· समर्थं किंचन साधनमुपलभामहे ॥

एषुचाचारभेदेषु आहारनियस्तावन्नितरा बहूकरणीय । अनेनैव च बुद्धींद्रिय मनासि विमलीभवन्ति । अत एव च धर्ममार्ग प्रकाशकरेषु विप्रेष्वय धर्म सर्वात्मना नियम्यते । तेषु तावद्यथाभिमत भोज्यार्थान्निखिलान् भोक्तु वा अकालनियम सर्वथा समशितु वा नास्त्येव स्वातन्त्र्यम् । देशकालभोज्यपङ्क्ति प्रभृतिषु सर्वत्रापि निर्बंध एव कृत तेषाम् । उचितमेवैतत् । अन्यथाह्यधन्याय प्रसरेत् । अस्मिन् प्रस्तावे स्मृतिपथमधिरोहति महनीयतमस्य अस्मद्देश मेधाविनो वचनमेतत् । यत् 'भोजन जीवनार्थाय न भुक्त्यर्थ तु जीवन' मिति ॥

आर्यमिश्रा ! अन्यश्चायमर्थ प्रस्तोतव्य एव भवति । यद्वर्ज्यावर्ज्य विवेचनमन्तरा सर्वैस्सर्वदा सर्वत्र मर्वमपि अशनीयमेव । विवाह विषयेपि स्त्रीपुमानित्येतद्व्यतिरिक्त कोपि निर्बन्धो माभूत् । तदात्व एव देशीय महाजनाना अन्योन्य सौहार्द समुन्मिषेदिति यदस्मदीयेष्वेव केचन भ्रमन्तीति ॥

परिशुद्धात् मानस· प्रादुर्भवितु हि अर्हमिद यत् सौहार्द नाम ! तत् कथं नाम मन क्षोभकरात् आहारदोषात् द्वेषोदर्कात् उन्मिषेदिति त एव ब्रुवन्तु । प्रत्युत विपरीतादाहारात् विरुद्धाच्चापि विवाहात् असूयाप्रद्वेषादि दोषा एव समुन्मिषेरन् । दैवी किल सपदिय यद्वास्तविक सौहार्दमिति । तत्तु मानवाना बुद्धिप्रवृत्त्यनुबन्धि गुणप्रकर्षाधीनि प्रादुर्भावभागिति अस्मत्सनातन धर्मसार ॥

## विवाह

विवाहस्तावद्वर्णाश्रमधर्मानुयायिना सर्वेषामेव धर्मविशेषाधिकार सपादक कश्चनानर्घगुणस्सम्कार । न तु बाह्यानामिव केवलो

अभ्यर्हणीय अनतिक्रमणीयश्चेति। एवंविध वधूजनाना विवाहस्य प्रौढ्यमनुचिन्त्यैव ता. अप्रादुर्भूत एव विषयभोगलपटतासपादके प्राथमिके वयसि समुचिते पात्रे समर्पयेरन्निति पित्रादीनाज्ञापयन्ति शास्त्राणि। पाश्चात्यकन्यकानामपि वत्सरे द्वादशे स्वेच्छया नायक-वरणमनुजानाति तेषा नीति। परतु आस्माकीनकन्यकासु पित्रादीना पात्रान्वेषणादि भारो बहुश समारोपित इति भूयसी किलात्र गुण समृद्धि। क्वचिद्दृष्टचरेपि विवाहविषये अमर्षणीये पुरुषदोषे अस्मन्महर्षि-प्रणीता विवाहपद्धति पर सर्वथा सर्वदेशीय सम्प्रदायानप्यातिशेते इत्यत्र नसशयलेशोपि। अतश्च दोषभाज एव परिष्करणीया नतु क्रियास्वरूप विपरिवर्तयितुमर्हति।

महाशया ! अस्मिन् सन्दर्भे डिल्लिमहानीतिसमाया मद्रसभा-याच हितैषाभिमानिभि कैश्चित् प्रवर्तयिषित अस्मत् सनातन विवाह-सरणि सचरणोपरोधी नीतिरूपो निर्बन्ध यथाच नास्मानुपरुन्धेत तथा जागरेण प्रयतितव्यमस्माभि ॥

## नीतिसभा

नह्येते उभेऽपि सभे समयाचार परिशोधानाय संशोध्य प्रेषितै-र्महाजन प्रतिनिधिभि परिमण्डिते पारिषदौ। परतु वेषभाषाचारादिभि-र्नितरा विरूपता गतै मतान्तर पुरुषै बहुलतर राजकीय सभे एव। अपिचात्र नीतिसभायामवयवतामापन्नास्तावत् न वर्णाश्रमधर्मनिर्णायक-शास्त्र परिचयभाज। किंच तेषु श्रेयस्साधनत्वप्रत्ययहीना.। प्रत्युत तानसमजसव्यापारानित्यवजानन्तोपि दृश्यन्ते। सर्वेषामप्येतेषा दोषाणा तद्बुद्धीना पाश्चात्यविद्याधिगममूलप्राकृतभोग लपटतैव हेतुरिति न ते वर्णाश्रमधर्म निर्माणविधौ सर्वथा अधिकार लवमपि वा लभेरन् ॥

अन्यदप्येतदत्र चिन्तनीयम्। यथा अद्य नीतिसभाधिकृतैः महा-जनप्रतिनिधिभिः यद्विवाहादिरूपसमयाचारस्य परिष्करणाय प्रयत्यते, न

तदंशेनापि महाजनमनोरथोऽनुस्त्रियत इति वक्तु पार्यते। यतस्ते महाजना सनातनसमयाचारेषु अविकलश्रद्धावन्त वैवाहिकसंस्कारादिक निखिल-मपि समयाचार अधुनिक विवक्षा तिरस्कृत्य पुरातन रीत्यैव कारयितु-मीहन्ते। अत एव च ते प्रतिनिधय महाजनानभिमतेपि जनताहितमिति अभिमते सनातनधर्मसेतु विध्वसने स्वकीय नीतिनिर्माणाधिकार दुरुपयुज्य तदुदर्क फलीभूत दुरितनिवह सात्विकमहाजनोपरि क्षेप्तुमीहन्ते। अत-स्तादृश दुरुद्यमः सर्वैरप्यस्माभि मनागपि नोपेक्षणीय ॥

## निगमनम्

महाशया! एवंविध वर्णाश्रमधर्मव्यवस्थासस्थापनविधौ शान्तै-रकलुषितैश्चास्माभि यतितव्यम्। यद्यप्यस्मासु केचित् वर्णाश्रमधर्मसेतो-श्शिथिलितसर्वावयवतया इतस्ततस्समीकरणायसः सर्वथा विफल एवेति अभिमन्यन्ते। अथापि अवशिष्टभाग परिरक्षणेनापि भूयान् फललाभ स्सजायेतेति पुन कालेनाय धर्मसेतु अविकल एव समुपचितस्सुदृढो भूत्वा समग्रमप्यानन्द इदानीन्तनानामस्माक आगामिनस्सत्सन्तान-निवहस्य च दायविधया सादर अर्पयित्वा सफलो भवेदिति च यत् सत्य वय विश्वसिम। नहिलोके दायक्रमायाते धननिवहे कोप्यश कालवशात् शीर्ण इति अवशिष्टोपि भाग. सागरे निक्षिप्यते। प्राक्तनपूर्तये खलु सर्वात्मना प्रयत्यते। अतश्च अनिर्विण्णहृदया अवधीरितविरोधाश्च वयम् ऐकरस्येन शान्तिसपन्ना अपरोद्वेगकरा' सहनशीलाः स्थिरस्वभावा सर्वजनविश्वसनीयाश्च सनातनधर्म प्रचार-याम.। न हीयते समीचीन वस्तु कुत्रापि केनचित् इति न्यायेनायं सनातनधर्मस्सर्वथा सर्वतो विजृम्भेतेति सर्वधर्मसमाराध्य सप्रश्रय प्रार्थ-यामहे। सर्वनेता श्रीपार्थसारथि स्वप्रसादसहस्रकिरणरश्मिभिरस्मदज्ञान तिमिरजालमपोहतु। वर्णाश्रमधर्मसवर्धन सत्पथे जस्मान् नीत्वा अस्म-न्मनोरथ पूरयत्विति सप्रत्यय सविश्वासचाशास्महे ॥

॥ श्री ॥

## श्रीमन्महाराज सस्कृतमहापाठशालावृत्तान्त.

श्रीमन्महाराज सम्कृतमहापाठशालाया विद्यार्थि पारितोषिक सभाया पाठशालाध्यक्षैरावेदितस्य प्रभवसवत्सरीयकार्यकलापवृत्तान्तस्याय सग्रह । यथा—

### उपाध्याया.

उपनवान् वत्सरान् श्रद्धयोत्साहेन च शिष्यान् अध्यापयन्त विद्वद्वरेण्याना श्लाघाया विद्यार्थिना कृतज्ञतायाश्च पात्रता गताः वेदशास्त्रयो पाण्डित्येऽद्वितीया नयविनयादिसद्गुणालकृता महाविद्वास करपत्तूरु वेंकटरामशास्त्रिण , तथा— सप्तदशमवत्सरान् साहित्य धर्मशास्त्रादीन् अध्यापयन्त साधव सज्जना इति च प्रथिता श्रीमन्तो विद्वास श्राम वेंकटाचार्या , तथा —मीमासाप्रधानोपाध्याया न्यायमीमासादि शास्त्रपारगता कल्याणगुणविभूषिता दूशी नरसिंहाचार्याश्च दिवगता इति निवेदन दुनोत्यतीव मानसम् । अनेन च कारणेन पाठशालाया विनष्टि महतीति नात्युक्ति ॥

अस्मिन् सदर्भे यजुर्वेदमुख्योपाध्याया महाविद्वास श्रीमन्त' अय्यावधानपाठिन वेदभाष्यप्रधानोपाध्यायस्थाने नियोजिता । तत' यजुर्वेदसहायोपाध्याया महाविद्वास श्रीमन्त. कट्टेमळलवाडि वेंकटरामावधानिन. प्रधानोपाध्यायस्थाने नियोजिताः ॥

एतेन कारणेन— सलक्षण घनान्तयजुर्वेदे स्मार्तप्रयोगे च दत्तपरीक्षा श्री ॥ बसवापत्तन श्रीनिवासावधानिन , साहित्यविद्वान् श्री ॥ हेडतले रामानुजाचार्या , व्याकरणवेदान्तविद्वान् श्री ॥ चक्रवर्ति तिरुमलाचार्याश्च तत्तत्स्थाने च नियोजिता. ॥

एतस्मिन्नेवावसरे—व्याकरणोपाध्या श्री ॥ नेरूरु कृष्णाचार्या· सम्कृतविद्याव्यासगपरीक्षामहासभापण्डिता श्री ॥ हरियप्पमहाशयाश्च अभिवृद्धवेतना अभवन् । अपिच वैखानसागमोपाध्याया श्री ॥ कोदण्डरामानुजाचार्या मुजरायिमुख्याधिकारिकार्यालये पण्डितपदे नियोजिता इति तेषा स्थाने समुचितोपाध्यायनियोजन कार्यनिर्वाहक-समिति पर्यालोचयति ॥

मीमासाशास्त्रप्रधानोपाध्ययस्थाने मीमासाधर्मशास्त्रविद्वास· श्री ॥ देवशिखामणि रामानुजाचार्याः दूशीनरसिंहाचार्याणामशक्तिसमय एव तात्कालिकनियोजनाविषयीभूता वर्तन्ते । अस्मिन्नप्यशे कार्यनिर्वाहक समिति समालोचयति ॥

## कार्यनिर्वाहकसमिति

अस्या समितावध्यक्षपदवीमधिरूढा पाठशालाभिवृद्धौ दत्त-चित्ता श्रीमन्त एस् पि राजगोपालाचार्यमहाशया अभ्युदय प्राप्ता इति कोलारनगरे न्यायाधिकारस्थानमलकुर्वाणा· श्रीमन्त ए रामराव-महाशया· श्रीमन्महाराजान्तरगकार्यवर्गे सहाय कार्यदर्शिस्थाने नियो-जिता , अत एव समित्यध्यक्षतामपि समवहन् ॥

## वर्गो विद्यार्थिनश्च

एतद्वत्सरारम्भे २३५ विद्यार्थिन आसन् । अद्य तु प्रौढ-शाखाया ३५ कौमारबालशिक्षाशाखासु १४३ वेदशाखाया ८४ आगमशाखाया ८ आहत्य २७० विद्यार्थिनस्सन्ति ॥

## विद्यार्थिवेतनम्

प्रतिमास राजशासनवशात् ७५६ रूप्यकाणि लभ्यन्ते । अस्मिन् वत्सरे प्रकल्पित विशिष्टाद्वैतविद्यार्थिवेतनद्वय २० रूप्यकाणि, कीर्ति-

शेषसचिवशिरोमणिना टि आनन्दरायमहाशयाना नाम्नाकितात् महीशूरविश्वविद्यास्थानस्थद्रव्यात् महापाठशालाप्रयोगविद्यार्थिने लभ्यमानमेक वेतन १० रूप्याणि । यळदूरुनगरविद्यामूलधनात् लभ्यमान वेतनद्वय ८ रूप्यकाणि । कीर्तिशेषै सि सुब्बरायमहाशयैः परिकल्पितमेक वेतन २५ रू आहत्य ८२५ रूप्यकाणि भवन्ति ॥

## विद्यार्थिभोजनम्

यथापूर्व श्रीमन्महाराजधर्मसत्रे ४० स्मार्त माध्व विद्यार्थिन श्रीश्वेतवराहस्वामिदेवालये १४ श्रीवैष्णव विद्यार्थिन श्रीपरकालस्वामिमठे २० विद्यार्थिनश्च भोजनानुकूल्यवन्तो वर्तन्ते । एवमेव अकिंचनेषु देशान्तरीयविद्यार्थिषु कतिपये वा भोजनाद्यानुकूल्यवन्तस्सन्त्वित्युद्देशेन पञ्चषसवत्सरेभ्य प्रागेव प्रतिष्ठापिताया वेदशास्त्रपोषिण्यभिधायास्सभायास्साह्येन केचनानुकूल्यभागिनो भवन्ति । इमापुनस्सभा प्रतिसवत्सरं श्रीपरकालस्वामिसन्निधिरपि रूप्यशतकेन अनुगृह्णाति । एतावता कालेन सभाया द्वादशसहस्राणि रूप्याणि सज्जीकृतानि । पचाशीति केदारनिर्वर्तनानि कृषिकर्मीकृतानि सन्ति । एतत्सभाकार्यदर्शिभ्य श्री ॥ सदाशिवशास्त्रिभ्य· श्रीमन्महाप्रभवः अस्मिन्नवरात्रमहोत्सवे सुवर्णसेवाभरण तदर्हे वस्त्रादिभिस्साक सतोषेण बहुमतिमकुर्वन्नित्येतत् महतो हर्षस्य स्थानम् ॥

## विद्यार्थिवसति

पाठशालाप्रान्ते निर्मितेषु आयतनेष्विदानीं १४० विद्यार्थिनः निवसन्ति । तेषां स्नानाद्यानुकूल्यमपि . कल्पितमस्ति । तेषां सदाचारादिपरतामपि परिपालयितु दृष्टिर्दत्तास्ति ॥

## पुस्तकभाण्डागारादिकम्

वर्षादौ २५९१ पुस्तकान्यासन् । इदानीं २७६४ पुस्तकानि

सन्ति । अपिचाद्य श्रीमन्महाराजाः महापाठशालायोगक्षेमैकदीक्षा स्वीयसरस्वतीभाण्डागारीया १६७१ लिखितपुस्तकसहिता २०८४ मुद्रितपुस्तकपरिपूर्णा सरस्वतीप्रतिमा सकलोपकरणसकलिता पाठशालोपयोगायात्रैव प्रत्यस्थापयन्नित्ययमश संस्कृतविद्याधिदेवतायास्सरस्वत्या एव भागधेयमित्यभिनन्दन्ति सर्वेऽपि ॥

किचास्मिन्नगारे वारमासिकपत्रिकाभि सगृह्यमाणाभि विद्यार्थिन कुशला भवितुमर्हन्ति ॥

अपिचात्रैव प्रकटीक्रियमाणाया पाठशालापत्रिकाया वत्सरत्रयात्मकेनैतावताकालेन १३ सचिका प्रकाशिता । भारतभूमौ सर्वत्र विद्यास्थानेषु परिगृह्यमाणाया अस्या इदानीं ग्राहका॰ ५०० सन्ति । राज्याधिकारस्थानसाहायकेनैषा प्रवर्त्यमानाऽपि स्थिरतायै कश्चिन्निधि परिकल्पनीय इत्याशयेन अद्ययावत् १६०० रूप्यकाणि सगृहीतानि-सन्ति । अस्या लेखकान् अनुग्रहीतॄन् ग्राहयितॄश्च कृतज्ञतासूचनेन सभावयामः ॥

### उपन्यासा

अस्मिन्नब्दे विद्यागणपतिमहोत्सवसमये यथापूर्वं बहवो विद्वास समीचीनैरुपन्यासै सर्वेषामानन्द प्रकाश चोपाजनयन् । तथा विद्यार्थिनश्च शुभया गीर्वाणवाण्या व्यवहर्तुं नैपुण्यसपादनाय प्रतिप्रतिपदमुपन्यासान् कुर्वन्ति । तेषा शिक्षायै प्रौढा बहव॰ पण्डिता अपि मार्गं दर्शयन्ति ॥

### परीक्षा

अतीते नवरात्रमहोत्सवसमये चतुर्दश विद्यार्थिन विद्वत्परीक्षायामुत्तीर्णा॰ । वार्षिकपरीक्षाया १५६ विद्यार्थिन । तेषु ६० विद्यार्थिन पारितोषिकार्हा आसन् ॥

अयमपरोत्र प्रमोद —श्रीमत्सु सचिववरेषु मिर्जामहाशयेषु शिवमग्गाप्रान्ते मचरत्सु तत्रत्या श्री॥ श्रीनिवासाचार्या श्री। मूगूरु कृष्णाचार्याश्च प्रतिवत्सर प्रवेशपरीक्षायामुत्तीर्णाना विद्यार्थिनामामन्त्र-पचविंशै रूप्यकै प्रोत्साह कुर्वन्तीति निश्चयो जात इति ॥

## प्राग्दर्शनम्

दशभ्यो हायनेभ्य प्राक् १५० विद्यार्थिन आसन् । अद्य ३०० सन्ति । अस्मिन् दशके प्राचीनविद्वत्परीक्षायाः पूर्वभागे १३६ विद्यार्थिन उत्तरभागे १८६ विद्यार्थिनश्च उदतारिषु । अपिच नवीन-क्रमे—प्रवेशपरीक्षाया ३१ मध्यमपरीक्षाया ८९ उत्तमपरीक्षाया ३७ विद्यार्थिनस्समुत्तीर्णा । तेषु ४७९ विद्यार्थिषु १९४ विद्यार्थिन एतत्पाठशालीया ॥

पूर्वं विद्यार्थिवेतनानि ६२४ आसन् । अद्यतु ८२५ कृतानि । विद्यार्थिनामायतनानि निर्मितानि । तेषु वैद्युतो दीपः प्रकाशते । वेदशास्त्रपोषिणीसभा काचित् स्थापिता । धर्मशास्त्र मीमासाशास्त्रयो· मुख्योपाध्यायस्थाने स्थापिते । वेदोपाध्याया अधिक-वेतनेन प्रोत्साहिता । आगम शास्त्रेषु पाठक्रम· व्यवस्थापित । विद्यार्थिना लौकिकविज्ञानायाग्लभाषा देशभाषयो परिचय प्रकल्पितः। विद्वत्परीक्षायामुत्तीर्णाना विशेषपारितोषिकाणि पूर्वं चत्वार्यसन् । अद्य विंशतिः स्थापितानि सन्ति इत्यय साराश सर्वेषा श्लाघापदम् ॥

## प्रेक्षका

अस्मिन् वत्सरे एतज्जनपदसदर्शनाय समागतेषु महाशयेषु— श्रीमन्त पण्डितमदनमोहनमालवीया श्रीकृष्णाचार्यसरस्वतीस्वामिनः शर्मण्यदेशीया रुडाप आटोर महा महाशयाश्च इमा शालामलङ्कृत्य उपन्यस्य च निरतिशयमानन्द समुदपादयन् ॥

अभिनन्दनम्

अत्र सर्वेप्युपाध्याया श्रद्धयोत्साहेन च कार्याणि निर्वर्तयन्तस्सन्ति । तेन पाठशाला सम्यगभिवर्धत इति विश्वासेन ब्रूम ॥

अपिच सनातनधर्मसंरक्षणाय बद्धदीक्षा संस्कृतभाषाभिवृद्धये सकलान्युपकरणानि कल्पयन्त विदुषो विद्यार्थिनश्च बहुधा संभावयन्त· वर्तन्ते श्रीमत्कृष्णराजेन्द्रसार्वभौमा ॥

ते हि महाराजा रजतमहोत्सवसमये वैदिकविद्वद्वराणामाशीर्वचनानि विनयेन स्वीकृत्य गभीरेण सहृदयहृदयाह्लादकेन भाषणेन सर्वान् आनन्दयामासुरित्येतदेव सहज विद्वत्पक्षपात प्रकटयतीत्यल प्रपञ्चेन ॥

एव वेदशास्त्रसप्रदाय परिपालयद्भ्य प्रभुवर्येभ्य तेषा बन्धुभ्यश्च भगवान् सर्वेश्वर आयुरारोग्यैश्वर्याणि सन्ततमनुगृह्णात्विति सदा प्रार्थयाम ॥ इति ॥

---

॥ श्रीः ॥

# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका.

प्रतिमासत्रय प्रकटीक्रियमाणा.

"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः"

(ईशोपनिषत्)

सपुट-४] जुलै १९२८ [सञ्चिका-३

## श्रीकृष्णनृपोदयप्रबन्धे राज्याभिनन्दनं नाम द्वितीयो भागः

सीमातीतदयाभिरामचरिता सामादिवेदस्तुता
सोमालकृतचारुरत्नमकुटा हेमाङ्कचेलोज्ज्वलाम् ।
क्षेमायाहमहर्निश कुवलयश्यामाङ्गकान्तिच्छटा
कामारिप्रमदा नमामि सुमनोदामाभिरामां शिमाम् ॥ १

सा किन्नु कुर्यात्प्रतिभा कवीनामुदारनेतारमनाप्नुवन्ती ।
न प्राभविष्यन्मुनिसिंहवाणी रघुप्रविरो यदि नाभविष्यत् ॥ २

आदर्शो राजचक्रस्य कवीना कल्पभूरुह. ।
सागरो गुणरत्नाना श्रीकृष्णो जयताच्चिरम् ॥ ३

युधिष्ठिरेणाध्युषित पुरा यत्तत. सुमालिप्रमुखैराधिष्ठितम् ।
सिंहासन यादववशसभवैरासादित कृष्णनृपोधितिष्ठति ॥ ४

स्थूललक्षैः महोत्साहैः कृतज्ञैर्मित्रवत्सलैः ।
शुचिभिर्धर्मरुचिभिराधिष्ठेयमिदं नृपैः ॥ ५
यदधिष्ठाय राजेन्द्रः श्रीकृष्णः शास्ति मेदिनीम् ।
अनेनैवास्य महिमा गुणवत्तापि सूचिता ॥ ६
समग्रशक्तेर्नयकोविदस्य क्रियाविशेषोपचितैः प्रयत्नैः ।
अनन्यपूर्वेव वसुन्धरेयमभूतपूर्वां श्रियमाबभार ॥ ७
यशस्स्वधर्मेण नयेन लक्ष्मीं गुणप्रकर्षेण जनानुरागम् ।
निजैःजसा मण्डलनाभिता च लब्ध्वाऽपि तस्योत्सिषिचे न चित्तम् ॥
दिनेश्वरे चन्द्रमसि प्रकामाविपक्षता कैरविणीनळिन्योः ।
दृष्टा न चास्यास्ति विपक्षता यत् तयोस्सधर्मा नृपतिः कथं स्यात् ॥
यशसा धवळितहरिता नाम्ना कृष्णेन वपुषि गौरेण ।
धवळारुणेन चक्षुषि चित्रेणेव प्रसाधिता वर्णाः ॥ १०
नानावर्णामोदैस्सुमनोभिस्सगतं सुमस्तबकम् ।
राज्यं च कृष्णनृपतेः करविधृतं भाति सौमनस्येन ॥ ११
सृक्वोपान्तप्रसृमरमृदुस्मेरवक्त्रोऽममेय
स्फारप्रेमप्रमुखसुगुणैर्विश्वविश्वासभूमिः ।
धर्मन्यायैरुपचितयशाः रत्नसिंहासनस्थ
स्फीतप्रीतप्रकृतिरशिषद्राज्यमव्याहताज्ञः ॥ १२
इत्थं प्रजानां सुखसंपदर्थं नित्यं समुत्साहवतो नृपस्य ।
पञ्चाधिका सा शरदां दशद्वयी मुदा व्यतीयाय निमेषकल्पा ॥
श्रियस्समग्रा इव नीतिकोविदं सरो मराळा इव फुल्लपङ्कजम् ।
मधुव्रतौघा इव पुष्पितद्रुमं प्रजा प्रजानाथमभिप्रपेदिरे ॥ १४
सौराज्यमुदिताः पौराः पञ्चविंशतिवत्सरे ।
पूर्णे नृपतिमामन्त्र्य चक्रिरे रजतोत्सवम् ॥ १५

तदित्थमनुभूतमनुश्रूयने च—एवमाराज्यभारवहनमापञ्चाविंशति सवत्सर महताध्यवसायेन प्रसाधितराज्यमण्डल गुणानुरक्तनिखिलजन जेगीयमाननिजापदान दुष्प्रमहेन तेजसा नथम सकलतेजस्विना कुवलयाह्लादकसुवृत्तमण्डलतया द्वितीय राकाचन्द्रमस लोकसवनन रूपसपदा तृतीयमाश्विनो जन्मनाऽभिधेयेन च चतुर्थ यदुराजकुल सभवाना अतिमानुषशक्तिमत्तया पञ्चम चतुर्दिगीशाना परार्थसाधक सकलगुणतया षष्ठ पञ्चमहाभूताना आज्ञाविधेयनिजचक्रतया सप्तम मगरादिषट्चक्रवर्तिना विशुद्धनिजचरितमहिम्ना अष्टम मसर्षीणां पुण्यश्लोकतया नवममष्टवसूना धनदस्पृहणीयविभवतया दशम नवनिधीना शत सुकृतकर्मभि सहस्रमायुषा असख्येयमपि गुणग्रामै-रग्रगण्य निखिलोर्वीपतीना माननीय महात्मना शरण्य सकलजनाना वसुधराधुरधरमेन अगस्त्यप्रमुखा महर्षयो लक्ष्मणानुचर श्रीरामचन्द्रमिव सकलगुणगणाभरणेन प्रत्याश्रितनिखिलदेशराज्यतन्त्रेण नैसर्गिकवात्सल्य-विहितदेशोन्नतिकार्यसचिवेन श्रीमता विख्यातयशसा श्रीमत्कण्ठीरव नरसिंहराजाभिधानेन युवराजपदाङ्कितेन निजानुजन्मना समुपास्यामान श्रीमन्त महाराजाधिराज श्रीकृष्णराजेन्द्रमुपश्लोकयितु सभूय निखिलपौर जानपद देशीया महाजना रजतमहोत्सव व्यपदेशेन विहितानेक महीरुहारोपण शक्रध्वजोन्नमनादि चिरस्थास्नुसौराज्यप्रत्यभिज्ञाननिदानै क्रियाविशेषैरापूर्य सकलदेशावकाश मोपायना विहिताञ्जलया विनीतवेषाः प्रतीक्षाचक्रिरे ॥

साहष्टिकोदर्कफलप्रदाभिराशीर्भिराम्नायपदोदिताभि ।
सवर्धयन्तो नृपतिं द्विजाग्र्या नवोदय सूर्यमिवोपतस्थिरे ॥ १६

भक्त्या गृहीत्वाऽऽक्षतशेषमाला सत्कारवत्या स गिरा जगाद ।
विप्राशिषा पात्रमिद कुल नस्तेनास्मि धन्योहमिति द्विजाग्र्यान् ॥

आमन्त्र्य विप्रान् विनयेन हेमपादाङ्कसिंहासनमारुरुक्षुः ।
राजेन्द्रनैपथ्यसमिद्धतेजास्सभामयासीदनुयायिवर्गैः ॥ १८

रत्नप्रभाकर्बुरिते मृगेन्द्रपीठे निषण्णं सुरराजकल्पम् ।
प्रणम्य बद्धाञ्जलयः प्रजास्ता व्यजिज्ञिपन्नित्थमुदारवाग्भिः ॥ १९

श्रीमन्महाराज राजपरमेश्वर प्रौढप्रतापाप्रतिमवीराद्यनेक बिरुदाङ्कित निखिलराज्यतन्त्रप्रवीणसंस्तूयमाननिजचरित निर्व्याजवत्सल श्रीमन्नाल्वडीत्युपपदभूषिताभिधेय श्रीमच्चामराजेन्द्रतनूभव श्रीमन् श्रीकृष्णराजेन्द्र महास्वामिन्! एकोनपञ्चाशदुपस्कृताष्टशताधिकसहस्रवत्सरपरिमिते शालिवाहनशके प्रभवनाम्नि संवत्सरे मासि श्रावणे तिथौ च दशम्यां सेन्दुवासरायां श्रीमत्कृपापरिपोषितैः सौराज्यसौख्यानुभवप्रमुदितैः नानाजातिमतप्रजामण्डलप्रतिनिधिभिस्सविनयं साञ्जलिबन्धं सभक्त्युन्मेषं समर्पिता कृतज्ञताप्रदर्शकरजतमहोत्सवाभिनन्दनव्यञ्जिका विज्ञापनपत्रिका समाभृताचेयं श्रीमतो महाराजस्य दिव्यचित्तावधानविषयिणी भूयादिति सम्प्रार्थयामः ॥

महाराजाधिराज दिव्यानुभावचरित! तत्रभवतः श्रीमतः कुलपरंपरागतदिव्यमहिमान्वितरत्नसिंहासनसमारोहणसुमुहूर्तमारभ्य दुर्भरराज्यभारनिर्वहणनिस्तन्द्रस्य भूयिष्ठकल्याणपरंपरोपचिताः पञ्चविंशतिवत्सराः अद्यतनसुमुहूर्तस्य समतीताः । भूयस्यास्मिन् समयान्तराळे निखिलप्रजाक्षेमाभ्युदयैकप्रवणमानसेन महास्वामिना प्रसाधितानि ग्रामनगरजनपदानि समुत्तेजितानि संपदभिवृद्धिसाधनकर्माणि । प्रजाश्च विनयनभरणादिभिस्संवर्धिताः संभाविता विबुधाः समानिताः महाजनाः संसेविता महात्मानः व्यपनीतव्याळदस्युभयानि कृतान्युपवनानीव महाकाननान्यपि सेतुबन्धादिभिः गृहदीर्घिकीकृतानि दुष्प्रतराण्यपि जलदुर्गाणि निरीतिबाधं प्रवर्तितो वणिक्पथः पूर्तकर्मभिः पूरितेयं वसुंधरा प्रवर्तितस्सकलश्रेयस्करो

धर्मपथ' नीतेय वसुधा राजन्वतीति श्लाघापद महीतलाधिष्ठित विष्टपमिव परिष्कृत राजधानीपद समुपदर्शित दैवदौर्बल्य पुरुषकारेण सत्यानुषगसमार्जितानि दिव्याद्भुतानि निजचरितानि धराफलके सुवर्णाक्षर लेख्यानि सवृत्तानि समार्जित कल्पान्तस्थायि विशुद्धिविशद यश । एवमादिभिरानितरसुलभै क्रियाविशेषोपचितैः भूरिफलोदर्कै प्रभुशक्तिसभृतैस्सुकर्मभि सप्रीणिता' निखिला प्रजा निखिलानन्दानामुपरि वर्तन्त इति सानन्द च सावष्टम्भ च सानुर्नय च सभक्तिप्रकर्ष च विनिवेदयाम ॥

निखिलराजचक्रचूडामणे महाप्रभाव' भवद्गुणग्रामानुरञ्जितहृदय श्रीमान् सार्वभौमोपि क्लृप्तस्याप्यादीयमाने करे सार्धदशलक्षपरिमित द्रव्याणा प्रत्यर्पणेन श्रीमन्त तत्रभवन्त सभावयामासेति महदिद प्रहर्षस्थानमस्माकम् । क वा न वशयन्ति भवद्गुणग्रामा स्वभावपेशला

राज्यतन्त्रधुरधरमहाजनोपचीयमानविभवाना निखिलराज्यानामिदमेवादर्शभूत राज्यमिति विबुधजनजोघुष्यमाणश्लाघापदस्य भवदीय राज्यतन्त्रकौशलमेव निदानमिति महदवष्टम्भपदमस्माकम् । किच निरतिशयोदारप्रकृतिना महास्वामिना प्रजाकार्येषु प्रजा एव स्वतन्त्रयितु प्रतिष्ठापितासु प्रजाप्रतिनिधि राज्यशासनाविधान पौरसामाजिककार्य निर्वहण सपदभिवृद्धि प्रमुखासु समितिषु नियुक्ताना सर्वतोप्युपचीयमानबुद्धिकौशलाना प्रजाना स्वकर्तव्यतापरिज्ञान देशसेवासक्ति' राजनीतिविज्ञान सर्वभूतमैत्री परोपकृतिरुपशातिरुत्साहस्सन्ततिरात्मसयम सतोष इत्यादयो महापौरुषिका गुणास्समेधन्ते । तेन सर्वत्र सुखसपत्फलान्यमृतकल्पान्यनुभूयन्ते सर्वाभि प्रकृतिभिः । यच्च राजधर्मप्रजाधर्मयोरविनाभावस्सबन्ध. परम्परमभिन्नार्थत्व च प्रतिपादित पूर्वाचार्यै तदिद

राज्यतन्त्रनिष्णातमतिना महास्वामिना समुपदिष्टमन्येषामपि सर्वेषा भूभृताम् ।

महाराजाधिराज स्फीतकीर्ते ! सविभागशील पुरुषविशेषाभिज्ञ न्याय धर्मानुवर्तिन दीनानुकम्पिन महासत्त्वनिकेतन वशिन वसिष्ठमिव निस्पृह जनकमिव सर्वधर्मज्ञ मनुमिव भूतलोक भरतमिव सर्वलोकप्रिय राममिव तत्रभवन्त भवन्त पालयितारमामाद्य फलितमस्मद्भागधेयेनेति नितरा प्रमोदामहे। अपत्यानिर्विशेष परिपोषिता निरीतिबाध सवर्धिता वयमिह कृतमहोपकृतये सर्वसत्त्वदयावते निर्व्याजवत्सलाय श्रीमते सानुषगाणि कल्याणान्याशासाना भाविसुवर्णरत्नोत्सवादिषु सेवावसर प्रतीक्षमाणाः सपरिच्छदस्य श्रीमतो महाराजस्य दीर्घायुरारोग्यसपत्सुखसमृद्धिमभिम-तार्थसिद्धिं च निरन्तरमनुगृह्णातु निखिलशक्तिधर पराशक्तिमित्र परमेश्वर इति सभक्तिप्रकर्ष प्रार्थयाम ॥

सतर्षमाविष्कृतराजभक्तिप्रकर्षहर्षाश्रुपिनद्धकण्ठा ।
विज्ञाप्य तस्मै नृपपुगवाय समर्पयामासुरुपायनानि ॥ २०

तदनुराजाधिराज श्रीमान् कृष्णराजेन्द्रोऽपि नैसर्गिकराजभक्ति समावर्जितान् निखिलनैगमान् प्रसादमधुरया दृशा समभिवीक्ष्य प्रसन्नमुखरागानुमेयसहजवात्सल्य नवजलधरारावगम्भीरेण सुधीरेण स्वरेणानन्दयन् विबुधजनसभावनीया प्रसन्नगभीरार्थामिमा वाणीम-भाणीत् ॥

अस्मदत्यन्तप्रिया महाशया महाजना. सविशेषमुपदर्शित राजभक्तिभि. तत्रभवद्भि. समर्पितामिमामस्मद्विषयकप्रीतिगौरवाद्यभि-व्यञ्जिकामभिनन्दन विज्ञापनपत्रिकामभिनन्द्य नितरा प्रमोदामहे। अस्या सादरमुपदर्शिता भवदीया भक्ति श्रद्धा च महान्तमानन्दमुपजनयत्य-

स्माकम् । भक्तानुकम्पिना भगवता यथेद सर्वसपन्निकेतन महीशूरराज्य-मस्मदर्थे प्रतिपादितम्, तथैवानुकूला शुचयो दक्षिणा दक्षाश्च प्रजा अस्मत्सहोत्थायिन्य प्रतिपादिता । यदिदमस्मत्पालित राज्य निखिल राज्यानामादर्शभूतमिति, यद्वैव समग्रशक्तिभि परमवत्सलै सार्व-भौमैरुपदर्शित परम पुरस्कार इति च तस्यार्थस्य सकलस्यापि युष्मदीय राजभक्तिपूर्वक साहाय्यकरणमेव निदानम् । एवमेव पुरस्तादपि परस्परमभिन्नाभिसधिभिरस्माभिरुपक्रान्तेषु वार्तादण्डनीत्यादिजनजविन सुखहेतुषु कर्मसु सौकर्याभिवृद्धये प्रयतमानै समूयैव सकलप्रजा समानभोग्यमिद राज्यमभिनवक्रमसमुपचीयमान सकलराज्यानुकारि च यथा मपत्स्यते तथाऽस्माभि प्रभुमन्त्रोत्साहशक्तिनिर्व्यूढकार्यारम्भैरप्रमादेन वर्तितव्यम् । महत्यस्मिन् कार्याभियोगे निखिला प्रजा विभिन्नवर्णाभि-रुचयोपि नियतैकजन्मभूमयस्सहसवर्धिता सोदरा इव सुखसविभागार्हा इत्यनुसधाय विख्यातैरभिजातैर्महाजनै समुचितसहायदानेन दुर्बला सवर्धनीया इत्ययमभिसधिरस्माकम् । वर्धिष्णवो भविष्यत्प्रजाप्रधाना युवानोपि सर्वत्र सहोदरसौहृद प्रजाधर्म च सम्यग्विजानाना सकल विस्रम्भभाजनेन सकल प्रजामण्डलेन सहैककार्यारम्भा असदत्यन्ताभि-मतजन्मभूमिश्रेयस्साधनाय प्रयतेरन्नित्याशास्महे ॥

माननीया महाशया ' अन्यदिदमस्माकमत्यन्ताभिमतमावेदनीय-मिदानीम्—सकलप्रजाना नित्योपकृतिसाधनेषु स्वाश्रयप्रीतिमत्सु निज-व्यथानिवेदनाक्षमेषु प्राणिषु सर्वदा दयालुभिर्भाव्य सर्वैरिति ॥ आसिंहा-सनारोहणमद्यावधि सततमस्मत्प्रियतमप्रजासु सर्वेपि सुखेन समेधन्तामिति प्रवर्तितेस्मिन्राज्यभारे यावदायुस्तदेकलक्ष्यसाधनाय स्थिरोत्साह सकल्प विवेक सहायमपदुपबृहिता शक्तिमस्माकमनुगृह्णातु दयामयो भगवा निति सतत प्रार्थयामः । इति सदिश्य सर्वान् सबहुमानमानन्दयामास ॥

अस्मद्राज्ये सुखेनैव समेधन्ता प्रजा इति ।
शासन घोषयामास राजा मुमुदिरे प्रजा ॥ २१

गवामदोह शुकबन्धमोक्ष सदानितानामपि मोचन च ।
विश्राममुक्ष्णा भृतिमाश्रिताना समादिशत्कृष्णनृप प्रमोदात् ॥

द्वीपाद्दिगन्तादपि सागरान्तात् क्षितीन्द्रकल्पा' क्षितिपालकाश्च ।
गुणानुरक्ता नृपतेरमुष्य चक्रुर्महार्घाण्यभिनन्दनानि ॥ २३

सौराज्यप्रत्यभिज्ञानजैत्रशक्रध्वजोन्नते ।
चक्रे मूलशिलारोप स्वाभ्युत्थानमिव स्थिरम् ॥ २४

आनन्दादिह ननृतु प्रजास्समग्रा'
समोदात्करितुरगा अपि व्यनृत्यन् ।
तच्चित्र मरुदवधूतशाखिबाहा
प्रानृत्यद्धरणिरपि प्रहर्षिणीव ॥ २५

तस्मिन्नेव दिने सर्वराष्ट्रभागे नृपोत्सवः ।
प्रमोदनिर्भरे पौरैर्निर्ममे विभवोत्तर ॥ २६

कल्याणनगरे सर्वसपत्केन्द्रे सुखाकरे ।
अन्वाज्ञासीदुत्सव स्व प्रजाभिरनुनाथित ॥ २७

अभ्यर्थितः पुरजनैर्नगरोत्सवाय
भक्तिप्रकर्षविवशैरुररीचकार ।
नित्यानुरक्तजनताहृदयानुवृत्ति
नैसर्गिकी खलु महत्सु दयामयेषु ॥ २८

अत्रान्तरे कविवचोविभवातिवृत्त
सपत्समृद्धनृपवर्यपरिच्छदानाम् ।
प्रास्थानिकस्समभवत्पटहप्रणाद
व्यामिश्रनाळिकरव' प्रतिबोधनाय ॥ २९

तत्र प्रस्थानभेरीरसितनिशमनोत्सिक्तपादातवर्गे
राक्रान्तोदात्तवल्गत्तुरगनियमनायस्तसादिप्रकाण्डै ।
माद्यत्कुम्भीन्द्रकुम्भाक्रमणपटुतराधोरणाग्र्यैस्समन्तात्
आक्रान्ते राजमार्गे समजनि जनतासभ्रमोत्थ प्रमोदः॥ ३०
नृत्यत्तुरङ्गमखुराहतिदीर्यमाणसर्वसहातलसमुत्थितपांसुजालैः ।
व्योम्निप्रभाकरकराहतिवारणायव्यानद्धपाण्डुरवितानिभैर्व्यराजि॥
तुरङ्गमातङ्गशताङ्गसघसघट्टितोर्वीतलरेणुजालै ।
आक्रम्य मूलान्यधिरुह्य सालानारुह्य शैलान् दिवमाललम्बे ॥
पट्टोपधानतपनीयकुथाभिराममाबद्धरत्नसवितानसुवर्णडोलम् ।
आस्थाय भद्रगजमूर्जितवैभवेन प्रावीविशत्पुरवर पुरुहूतकल्प ॥
महोदयाद्रिप्रतिमे गजेन्द्रे निजानुजामात्ययुतो नरेन्द्र. ।
अन्वासितो व्योम्नि पुनर्वसुभ्या शशीव नेत्रोत्सवकृच्चकाशे॥३४
पुरन्ध्रय पौरवर्गाश्च पूर्णकुम्भफलादिकम् ।
पुरत पार्थिवेन्द्रस्य प्रगृह्य प्रययुर्मुदा ॥ ३५
छत्रद्वन्द्व शशधरनिभ चामरे रत्नदण्डे
हेमच्छायाशबलबिरुदाः काहळीशङ्खयुग्मम् ।
वीणावशीपटहमुरजा वन्दिनो मागधाश्च
श्रेणीभूता नृपतिपुरतो दर्शनीया विरेजु ॥ ३६
सकायमान प्रचलद्वितान सकेतुमाल चितपुष्पमालम् ।
स राजमार्गं विहतोपसर्गं विवेश राजा सुरराजतेजा ॥ ३७
श्रुतिमिळितसमग्रातोद्यसभिन्नसप्त
स्वरसमुदितषड्जग्रामगम्भीरघोषै. ।
ललितमधुरगीतैर्वंदिना तारावैः
भुवनमिदमशेष नादभूयिष्ठमासीत् ॥ ३८

उद्दीपकश्वसनवेगविवृद्धशक्ति
सन्धुक्षिते स्फटिकभाजनविस्फुरद्भिः ।
दीपैश्शशाङ्कशतसुन्दररश्मिमालै
र्ज्योतिष्मतीव वसुधा नितरां रराज ॥ ३९

आग्नेयचूर्णपरिपूरितचक्रनिर्य
ज्ज्वालाजटालघुटिकास्फुटनोज्जिहानैः ।
हरित्प्रवाळहरिनीलसुवर्णकल्पै
कीर्णैः स्फुलिङ्गनिकरैर्गगनं दिदीपे ॥ ४०

प्रत्यूषमारुतदरोच्छ्वसितप्रसून
जालाभिरामशुभलाजचयैः कुमार्यः ।
अभ्यर्चयन्नृपवरं मृदुमुग्धहास
व्यामिश्रणद्विगुणसम्भृतकान्तिरम्यैः ॥ ४१

नीराजनाविधिषु राजतहेमपात्र
मध्योल्लसद्रुचिरदीपशिखा स्फुरन्ती ।
शुभ्राभ्रपङ्क्तिषु कनत्कलधौतरम्य
सौदामिनीव वसुधेन्द्रपुरश्चकाशे ॥ ४२

मयि प्रसन्नो नृपतिर्मयीति ननन्द सर्वोपि जनस्तदानीम् ।
रत्नाकरस्येव नदीशतेषु विमाननाभून्न हि गोप्तुरस्य ॥ ४३

इत्थं समग्रविभवैः पुरवीथिकासु
सोपायनैः प्रणतपौरजनैर्नरेन्द्रः ।
अभ्यर्चितः पृथुयशा विचचार सर्वा
नानन्दयन् मधुरहासविलोकनाद्यैः ॥ ४४

इदमसुलभमन्यैर्भूमिपालैर्धराया
नृपतिककुदमेष प्राप्तवान् यन्महत्वम् ।

निजचरितविशुद्धि सत्यधर्मानुरक्ति ।
प्रभवति जनतासु प्रीतये गौरवाय ॥ ४५
नात्राधिकोक्तिर्नोत्प्रेक्षा नेय हि कविकल्पना ।
गुणैकदेशकथन गुणिनोस्य महीपते ॥ ४६
लभ्येत कोपि रसिको नवकाव्यलक्ष्मी
लीलासु चेत्कवयितुर्ननु लाभ एष ।
एक स एव मधुकृन्मधुसारवेदी
स्याविष्करोति कुसुमानि महीरुहोऽपि ॥ ४७
इद श्रीकृष्णराजेन्द्रचित्रचारित्र्यवस्तुकम् ।
सुब्रह्मण्यस्य कृतिषु जीयाद्राज्याभिनन्दनम् ॥ ४८
कनकमणिकिरीटोद्भासिनीलालकान्ता
शशिरुचिरदुकूला फुल्लकल्हारहस्ता ।
स्मितरुचिरमुखेन्दुर्हस्तिहस्ताग्रविप्र
स्सुरभिकुसुमदामा सा रमा सन्निवत्ताम् ॥ ४९
निरीतिबाध यत्कर्म कुर्महे श्रुतिचोदितम् ।
तस्य षष्ठाशभोक्ता स्याद्गोप्ता श्रीकृष्णभूपतिः ॥ ५०

इति श्रीकृष्णनृपोदयस्समाप्त· ॥

## कालिदासोपज्ञरसज्ञता.

४-१-४६ तमपुटात्

अन्यच्च त्रयोदशे सर्गे

गर्भं दधत्यर्कमरीचयोऽस्माद्विवृद्धिमत्राश्नुवते वसूनि ।
अविंधनं वह्निरसौ बिभर्ति प्रह्लादनं ज्योतिरजन्यनेन ॥

इति श्लोकस्यार्थं निगूढशास्त्रार्थप्रसन्नगम्भीर एवाभाति । यथा—रावणवधानन्तरं पुष्पकविमानमारूढवता रामेण सीतामुद्दिश्य सेतुनिर्माणविहितशोभाशालिसागरं प्रदर्शयता प्रतिपादितं सागरस्य स्ववंश्यमहत्तरसगरपुत्रखननाद्गाम्भीर्यं, स्वकर्तृकसेतुसबन्धाच्च लोकोत्तरत्वं, सर्वलोकोपकारकवृष्टयर्थं सूर्यरश्मीनां अम्मयगर्भाधाने उपादानत्वं सागरस्यैव नान्यस्येति "याभिरादित्यस्तपति ताभिः पर्जन्यो वर्षति, आदित्याज्जायते वृष्टिः वृष्टेरन्नं ततः प्रजाः" इति च श्रुतिस्मृतिसिद्धस्य सूर्यरश्मिगतमहामहिम्नः उपोद्बलकं सामुद्रमम्भ इत्यादिर्दुरूहोऽपि विषयः कविनान्यरूपि ॥

अयमेव विषयः दशमसर्गेऽपि समुचितसरसदृष्टान्तानुगुण्येन प्रत्यपादि । कथम्—

ताभिर्गर्भः प्रजाभूत्यै दध्रे देवांशसंभवः ।
सौरीभिरिव नाडीभिरमृताख्याभिरम्मयः ॥

इति । अत्र सौरीणां दीधितीनां सहस्रसंख्याकानां मध्ये काश्चन अमृताख्याः नाम्न्यः काश्चन वृष्टिसर्जनार्थाः काश्चन मुक्तानां ब्रह्मलोकप्रापकाः काश्चन यजमानदीयमानपुरोडाशपयःप्रभृत्याहुतिपापकाः सर्वाश्च पवित्राः स्थावरजंगमात्मकलोकोपकारशीलाः, इत्यादिः शास्त्रैकगम्यो विषयः वेदभागे प्रसिद्धः ॥

तासां शतानि चत्वारि रश्मीनां वृष्टिसर्जने ।
शतत्रयं हिमोत्सर्गे तावद्गर्भस्य सर्जने ॥
आनन्दाश्च हि मेध्याश्च नूतना पूतना इति ।
चतुश्शतं वृतिवाहा तास्सर्वा अमृता स्त्रियः ॥

इति प्रमाणान्तरेणापि अयमर्थस्ससिद्धो भवति ॥

अत्रैवसर्गे—प्रयागे गङ्गायमुनासङ्गमवर्णनावसरे —

क्वचित्प्रभालेपिभिरिन्द्रनीलै मुक्तामयी यष्टिरिवानुविद्धा ।
अन्यत्र माला सितपङ्कजानामिंदीवरैरुत्खचितान्तरेव ॥

इत्यारभ्य—

कचिच्च कृष्णोरगभूषणेव भस्माङ्गरागा तनुरीश्वरस्य ।
पश्यानवद्याङ्गि विभाति गङ्गा भिन्नप्रवाहा यमुनातरङ्गैः ॥

इत्यन्तेन श्यामलयमुनाप्रवाहसभिन्नशुद्धगङ्गाप्रवाह क्वचित्प्रदेशे इन्द्रनीलमणिखचितमुक्ताहार इव, क्वचिदिन्दीवरपुष्पगुम्भितसितपङ्कज-मालेव, क्वचिच्चकादम्बकदम्बककरम्बितराजहंसनिवह इव, क्वचित्तम कर्बुरितचान्द्रकलेव, क्वचिच्च कृष्णोरगभूषितभस्माच्छन्नमहेश्वरायिततनुरिव च चित्रविचित्रा राराजतीति कविर्वर्णयामास ।

तथा—

समुद्रपत्न्योर्जलसन्निपाते पूतात्मनामत्र किलाभिषेकात् ।
तत्वावबोधेन विनापि भूयः तनुत्यजां नास्ति शरीरबन्धः ॥

इति पद्येन—

सितासिते सरितो यत्रसंगथ तत्राप्लुतासो दिवमुत्पतन्ति ।
एवैतन्वाअविसृजन्ति धीरास्ते जनासो अमृतत्व भजन्ते ॥

इति बह्वृचमन्त्रार्थोपि सगृहीतः । "ब्रह्मविदाप्नोति परं, तरतिशोकमात्मवित्, ब्रह्मवेद ब्रह्मैव भवति," "तमेव विद्वानमृतइह

भवति" इत्यादिश्रुत्यनुसारात् ब्रह्मात्मकतत्त्वज्ञानेनैव मुक्तिरिति वैयासिकसिद्धान्त सत्वेऽपि—

बहूना जन्मनामन्ते ज्ञानवान्मा प्रपद्यते ।
वासुदेवस्सर्वमिति स महात्मा सुदुर्लभ ॥

इत्यादि गीतापर्यालोचनयाऽपि, अनेकजन्मसाध्यमुक्ते· गङ्गा यमुना सगमस्नानमात्रादभिव्यक्तत्वकथनेन सद्यो मुक्तिस्तनुत्यजा सभवतीत्यादि श्रौतोऽप्यर्थ सुगमतया प्रदद्दशे महाकविना ॥

तथा—महेश्वरपुरुषोत्तमादि शब्दा विष्णुशिवादिसाधारणा वा नवा इति सदिहानाना केषाचिदज्ञाननिवृत्यर्थ

हरिर्यथैक पुरुषोत्तम स्मृतः
महेश्वरस्त्र्यम्बक एव नापर ।

इत्यादिना पौराणिकलोकसम्मतः हरिरेव पुरुषोत्तम , त्र्यम्बक एव महेश्वरो नान्य इत्यादिक रूढ्यर्थ औचित्येन श्लोके न्यभान्सीन्महाकवि ॥

तथाषोडशे सर्गे—स्वदु खनिवेदनार्थ स्वप्ने आगतामयोध्याभिमानिनीं स्त्रीवेषधारिणीं देवतामुद्दिश्य कुशस्य उक्तिरूपे

का त्व शुभे कस्य परिग्रहो वा किं वा मदभ्यागमकारण ते ।
आचक्ष्व मत्वा वशिना रघूणा मन परस्त्रीविमुखप्रवृत्ति ॥

इति श्लोके रघुवश्याना राजन्याना "स्वप्नेप्यन्यवधूकथाम्" इति न्यायानुसारेण परस्त्रीपरिग्रहवैमुख्य प्रथमत· प्रतिश्रुत्य ततो वदितव्य वदेत्युक्त्या रघुवशस्थाना राज्ञा स्वाभाविक वशित्व सार्वजनीनमित्यभिव्यजितम् ।

तथा अष्टादशेसर्गे—

पितुस्समाराधनतत्परेण पुत्रेण पुत्री स यथैव तेन ।
पुत्रस्तथैवात्मिकवत्सलेन स तेन पित्रा पितृमान्बभूव ॥

इतिश्लोकार्थ , तत्रत्योऽलङ्कारश्च चमत्कारितामुद्गिरति। तथाहि, लोके य पितृशुश्रूषातत्परस्स एव पुत्र , यश्चात्मजे अतिशयप्रीतिमान्स पिता, इति व्यवस्थास्वारसिकी। प्रकृते क्षेमधन्वदेवानीकयो पिता- पुत्रयोरनयोरेव पितृत्वपुत्रत्वफल प्रशस्तमिति श्लोकस्य सपिंडितोऽर्थ । अत्रच पितापुत्रयो कर्तव्य लोकमर्यादामाश्रित्य सम्यक् निरूपितम् ॥

अलकारस्त्वतीव रमणीय । तथाहि—अत्रत्या उपमा व्यत्यस्त- धर्मिबिंबप्रतिबिंबिका, अस्या च पुत्र पिता चेत्युभौ उपमेयोपमानभूतौ धर्मिणौ पुत्रपित्रोस्तावेव व्यत्यासेन पितृमत्व पुत्रित्वमिति साधारण धर्मकोटिप्रविष्टतया उपात्तौ । तयोश्च बिंबप्रतिबिंबरूपसाधारण्यापादकौ धर्म प्रशसाबोधकाभ्या मतुबिनिभ्या समर्पित प्राशस्त्य पुत्रस्य प्रशस्तपितृमत्व पितुश्च प्रशस्तपुत्रवत्व च बिंबप्रतिबिंबभावकरबितवस्तु- प्रतिवस्तुभावेन साधारणधर्मौ भवत । एवच धर्म्युपमाया य पितापुत्रस्योपमान स एव पिता तस्य तदुपपादके बिंबप्रतिबिंबनिर्देशे उपमेयस्सम्पद्यते इति लक्षणस्य सगमन सुश्लिष्टम् । यद्यपि पितापुत्रयो परस्परनिरूपितसादृश्यस्य भानादुपमेयोपमेति सशयितु शक्यते यथा पुत्र पितृभक्त्या प्रशस्त , तथापितापि पुत्रवात्सल्येन प्रशस्तः इत्यर्थस्य लाभेपि तृतीयसदृशव्यवच्छेदरूपस्य मुख्यफलस्याभावान्नोप- मेयोपमा । तृतीयसदृशव्यवच्छेदफलकवर्णनाविषयीभूत परस्परसादृश्य- मुपमेयोपमा इति तल्लक्षणादिति सक्षेप ।

एव ' वागर्थाविव सपृक्तौ '' विति श्लोके पूर्णोपमेति प्राग्लिखितम्। तत्र साधारणधर्मश्चानुगामी, नित्यसबधित्वरूप इति चित्रमीमासाया वागर्थाविति श्लोके औत्पत्तिकस्तु शब्दस्यार्थेन सबध इति वागर्थयो नित्यसबधित्व प्रसिद्धम् । उमामहेश्वरयोरप्यनयो· न पृथग्भावश्चन्द्र

चन्द्रिकयोरिवेति तत्प्रसिद्धम् । तथाच नित्यसबधित्वरूपोऽत्र अनुगामितया निर्दिष्ट इति च प्रतिपादित दीक्षितवर्यैः ।

अत्र किंचिद्विचार्यते । अत्र नित्यसबधित्वरूपस्य धर्मस्य एकरूपेणोभयान्वयाभावात् कथमनुगामित्व धर्मस्य ? यतोऽत्रवागर्थयो· वाच्यवाचकभावरूपस्सबध , पार्वतीपरमेश्वरयोस्तु सयोगरूप इति सबधभेदात् । नच सबधतावच्छेदकभेदेन अनुगामित्वस्य दौर्लभ्यात् सबधत्वेन रूपेण अनुगामित्व विवक्षणान्न दोष इति वाच्यम् । येन रूपेण यस्य धर्मस्य उपमानगामित्त्व तेनैव रूपेण तस्य धर्मस्य उपमेयगामित्वमिति अवश्यमनुगामित्वलक्षण निर्वक्तव्यम् । अन्यथा उपचारस्य विधान्तरत्वकथनमसमजस स्यात् । तथाहि —

उद्भवन्तमुदितार्चिष ततो भानुमन्तामिव हेमभूभृत ।
पकजैरिव कुमारमीक्षणै विस्मयेन विकचै पपुर्जना ॥

इत्यत्र विकासरूपो पुष्पधर्म ईक्षणेषूपचरित इति हि वक्तव्यम् । तच्च न श्लिष्यति मुख्यलक्ष्योभयसाधारणविकचत्वस्योभयत्रापि सत्वात् । उपचारसंभवार्थं पुष्पेषु विकचत्व विजातीयपत्रविभागवत्वरूप नेत्रेषु-चोपचारान्निमेषराहित्य तत् इत्यभ्युपगतव्यम् । एव च एकेन रूपेण विकचत्वस्याभावात् उपचारस्य विधान्तरत्व आलंकारिकैरुररीकृतम् । प्रकृते वागर्थाविवेति श्लोके सपृक्तावित्यत्र येन रूपेण सबधस्य वागर्थयोर्बोध न तद्रूपेण पार्वतीपरमेश्वरयोरिति कथमनुगामित्वमत्र वक्तु युक्तम् ॥

ननु सबधत्व प्रकृते सबद्धाविति धीसाक्षिक· सयोगादिसाधार णो धर्मविशेष । एवच पर्यवसितधर्मयोर्यत्र एकधर्मावच्छिन्नत्व स एवानुगामिपदार्थ । प्रकृते वाच्यवाचकभावसंयोगसंबधयोरपि

सबधत्वावच्छिन्नत्व वर्तत इति यद्यभ्युपगच्छासि तर्हि विस्मयेनविकचै-रित्यत्रापि मिथ सयोगजनकक्रियाराहित्य उभयत्रापि सावारणमिति तद्दोषतादवस्थ्यम् ॥

किंचात्र अनुगामिधर्मस्य कीदृशेन उभयसाधारणधर्मेणावच्छिन्न-त्वमभिलषित, न तावद्येनकेनचिद्धर्मेण, प्रमेयत्वेन रूपेण सर्वधर्माणां साजात्यात् उपचार बिंबप्रतिबिंबभावादीना प्रकारान्तराणा प्रविलया-पत्ते । नापि द्रव्यत्वादिना तत्तद्धर्मेण, बिंबप्रतिबिंबभावस्थलेपि " पां-ब्योयमसार्पितलबहार " इत्यादौ द्रव्यत्वरूपधर्मस्य हारनिर्झरोभयवृत्ति-त्वेन अनुगामित्वापत्ति । नापि स्वजन्यशाब्दबोधप्रकारीभूतधर्मेण-सभवति । " यान्त्या मुहुर्वलितकधरमानन तदा, वृत्तवृन्तशतपत्रनिभ वहत्या " इत्यादि वस्तुप्रतिवस्तु भावस्थलेपि अनुगामित्वापत्तेः । उदाहृतश्लोके वलनोद्वर्तनयोरभेदेन स्वजन्यशाब्दबोधप्रकारीभूतधर्मा-वच्छिन्नत्वात् । नापि एकपदजन्यबोधप्रकारीभूतधर्मेणेतिवक्तु शक्यते । वलनस्य एकपदजन्यबोधप्रकारत्वसत्वात्तद्दोषाऽनपसरणात् । नच भिन्न-वृत्त्येकपदजन्यबोधप्रकारीभूतधर्मेण सभवति । उक्तस्थले वलनोद्वर्तनयो' वलितोद्वृत्तपदाभ्या बिंबप्रतिबिंबभावापन्नकधरावृतोभय विशेषणत्वेन एक स्यैव पदार्थस्योपस्थापनाद्वलनस्य न भिन्नवृत्तित्व । भिन्नत्व च स्वाव-च्छिन्नप्रतियोगिताकभेदवत्व । " वागर्थाविवे "ति श्लोके तु वाच्य-वाचकभावसयोगयोर्भेद' । तदुभयत्र च सबधत्वमिति च वाच्यम् । सयोगादेरपि सबधत्वावच्छिन्नप्रतियोगिताकपरस्परप्रतियोगिकभेदविरहात् भेदप्रतियोगितावच्छेदकसयोगत्वादेश्च एकपदजन्यबोधप्रकारत्वाभावाच्च । एवच वागर्थाविवसपृक्ताविव्यत्र अनुगामित्वनिर्वचन दु.शकम्, इति चेदत्राहुः ॥

धर्मवृत्तिसामान्योपस्थापक पदैक्य एवानुगामित्व इति व्यवस्था

धर्मत्वं च तत्पदनिर्वाह्यधर्मतावच्छेदकतापर्याप्त्यधिकरणत्वं । अतो बहूनां मिश्रणस्थले नानुपपत्तिः । बिंबप्रतिबिंबभाववारणाय एकेति सामान्यविशेषणं देयम् । श्लेषस्याप्यनेनैव वारणं संभवति । ऐक्येति वस्तुप्रतिवस्तुभावनिरासार्थं दत्तम् । तत्र धर्मैक्येपि पदभेदाद्वारण । अत्र धर्मस्यैकत्वे एकस्यैव धर्मतापर्याप्त्यधिकरणत्वं, अनेकत्वे द्वयोरेंऽव-इत्यादिदुरूहशास्त्रार्थसमुल्लासयोग्यं अनवद्यपदहृद्यपद्यनिर्माणचातुरी लोकातिशायिनी महाकवेरिति सुधियो विभावयन्तु ॥ एवं—

क्व सूर्यप्रभवो वंशः क्वचाल्पविषया मतिः ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥

इति श्लोकेपि पूर्वार्धे महत्तरगुणगणनीयसूर्यवंशवर्णनस्य परिमितयत्किंचित्पदार्थविषयकबुद्धिवैभवस्य च क्वद्वयेनाननुरूप्यं प्रदर्शितमिति विषमालंकारः स्पष्टः । उत्तरार्धे तु अल्पया मत्या महत्तरसूर्यवंशं वर्णयितुं प्रवृत्तोस्मीति प्रकृतवाक्यार्थमनुपन्यस्य तद्धर्मिणि अल्पसाधनीभूतोडुपकरणकमोहहेतुकदुस्तरसागरतरणेच्छावत्त्वरूपस्य तत्प्रतिबिंबभूतस्य वाक्यर्थस्यवर्णनाल्ललितम्, इति केचिद्वर्णयन्ति ॥

अपरे तु अत्र वाक्यार्थनिदर्शनैवेति संगिरन्ते । तथाहि इह-तावदलंकाराः श्रौता आर्थाश्च प्रायेण संभवन्ति । तत्र श्रौतेभ्य आर्थाः पृथगलंकारत्वेन न संख्यायन्ते, किंतु पृथग्भेदतयैव । यत्र व्यवहारद्वयवद्धर्म्यभेदप्रतिपादनाक्षिप्तः व्यवहारद्वयाभेदः तत्र व्यवहार-द्वयवद्धर्म्यभेदप्रतिपादनं श्रौतमेवापेक्षितमिति न नियमः । किंतु प्रतिपादनमात्रम् । तेन "आददानः परद्रव्यं गिलति क्ष्वेलसंचयम्" तत्र व्यवहारद्वयवद्धर्मिणोः अभेदस्य श्रुत्या प्रतिपादने इव "चिक्परस्वं तथाप्येषः विषमत्ति सुदुर्मतिः" इत्यत्र आर्थप्रकृतव्यवहारवद्धर्मि

श्रौताप्रकृतव्यवहारवद्धर्मिणो आर्थाभेदम्य प्रतिपादनेपि वाक्यार्थनिद-र्शनात्वमक्षतमेव। एकत्र श्रौतीत्व, अन्यत्रार्थीत्वमिति विशेष पर वर्तत इत्याहुः॥ मतद्वयस्यास्य सारतरो विचार रसगङ्गाधरादिषु प्रतायत इति नेहप्रयत्यते। एवमादयोलङ्कारा' अनवधय' अत्र कालि-दासग्रन्थे विस्तृता इति कालिदासीयकाव्य सामान्यस्य रसालङ्कारभरि-तत्व सुस्पष्टम्॥

---

## अंबास्तुति

ब्रह्मादयो बहुमुखा विबुधेश्वरास्ते स्तोतु न ते गुणगणान् प्रभवो भवन्ति ।
मातर्वदैकवदनस्य ममाल्पबुद्धे स्यादीषदप्यवसर किमु तादृशस्ते ॥ १

मूक कविर्भवति शकरि किंकरस्ते राकानिशाकरमुखि प्रमुखे सुराणाम् ।
वाचामधीश्वरि महेश्वरपालि गौरि त्व मे विधेहि ललितानि वचोऽमृतानि ॥

कादम्बिनीव तृषिताय च चातकाय दीनाय मे वितर जीवनमब नित्यम् ।
त्वामन्तरेण शरण न च देवमन्य मन्ये मदिष्टपरिपूरण मद्रिकन्ये ॥ ३

चेत कपिर्मम सदा विनयादपेत' तृष्णाकुलो विषयवृक्षवन प्रयाति ।
मातस्त्वमेव तदिम कुरु भक्तिदाम्ना बद्ध न चेदयमसारफलानि भुङ्क्ते ॥ ४

ससारसागरमपारमिम गभीर प्राप्तस्य तत्र च दुरीहितनक्रजालै ।
दष्टस्य शैलतनये चरण त्वदीय सत्य वदामि तरणिं शरणायमानम् ॥ ५

विद्यार्जन छलमवाप्य मया दयालो नाराधिता त्वमसि मुग्धधिया तथापि ।
त्वं मा विलोकयसि वत्समिम हसन्ती माता भवेन्नहि कदापि कठोरचेता ॥

रोगो दहत्यविरत मम गौरि देह भोगाभिलाषनिचयश्च मनश्च देवि ।
कष्ट मदीयमिदमब दयापयोधे त्वामन्तरा कमधुना विनिवेदयेयम् ॥ ७

कारुण्यपुष्परसपूर्णमुमे त्वदीय पादारविन्दमतिसुन्दरमायताक्षि ।
भृंगस्य मे भवमरुभ्रमतापितस्य शीताद्रिपुत्रि तनुगात्रि शरण्यमस्तु ॥ ८

केशवभट्टः—विद्यार्थी.

## पाठशालावृत्तान्तः.

17—5--1928

इदमिदानीमवधारणीयम्— श्रीमन्त. चक्रवर्ति रामानुजय्यगार्य महाशया श्रीमन्महाराज संस्कृत महापाठशालाध्यक्षपदवीं 11-10-1919 समये समारुह्य महापठशालाकार्यं सम्यक् निरूह्य इदानीं राजकीय-विद्याशाखा विभूषयन्ति । तेषा विद्याशाखायामनल्प अभ्युदयादिक भूयादित्याशास्महे । महाशयानामेतेषामेवाधिकारसमये लब्धजनिरिय पत्रिका सहृदयानामतीवानन्दमावहतीति विदितचरमेव विश्वेषा वाचकमहाशयानाम् ॥

इदानीं पुन महीशूरीय विश्वविद्यानिलये संस्कृतभागे शास्त्र-विषये च ए ए. उपाधिं लब्ध्वा देशीय संस्कृतपाठशाला निरूपक-पदमलङ्कृतवन्त. श्रीमन्त योगनरसिंहार्यमहाशया तामेव महापाठशालाध्यक्षपदवीमलङ्कुर्वन्ति । महापाठशालाभिवृद्धौ दत्तचित्तानामेतेषामपि काले परमा ऋद्धिमीयादिय महापाठशाला इय पत्रिकाचेत्यनुगृह्णन्तु महान्त इति ॥

30—5—1928

अस्या श्रीमन्महाराज संस्कृतमहापाठशालाया ज्येष्ठशुक्लैकादश्या बुधवासरे श्रीमन्महाराजस्य चतुश्चत्वारिंश. जन्मदिवसमहोत्सवः श्रीविद्यागणपति पूजा राजाशीर्वादप्रमुखश्रेयस्करकार्यकलापेन सत्कृत. । तदनन्तरादिवसे मध्याह्नात्पर सर्वैरधिकारिभि. सर्वैश्च विद्वाद्भिः सम्पूर्णे पाठशालाप्रासादे श्री ॥ महामहोपाध्याय पण्डितरत्न लक्ष्मीपुरं श्रीनिवासाचार्या श्री ॥ धर्माधिकारि पेरियकोळ रामचन्द्राचार्या श्री ॥ महामहोपाध्याय विद्यानिधि विरूपाक्षशास्त्रिणः श्री ॥ महाविद्वांस. अ-

घ्याघनपाठिनश्च नीतिविषयकेण राजभक्तिविषयकेण विद्याविषयकेण श्रीमन्महाराजगुणविषयकेणचोपन्यास्येन सर्वानानन्दयामासुरिति निवेदन केवल स्वभावोक्ति. ॥

9—7—1928

अयमपरो वृत्तान्तस्सर्वेषा विदुषा तोषावह समुचित श्रोतुम् । य एष श्रीमन्महाराजास्थान मुजरायिभाक्षि पदवींमलकुर्वाण. इदानीमेव विश्रान्तिं लभमान पुरुषधौरेय राजकविभूषण विरुदालकृत एच् लिङ्गराजप्रभुमहाशयः आस्थानविद्वन्मण्डल्या आशीर्वादसत्कारमहोत्सवेन केन चिदभूतपूर्वेण अस्यामाषाढ कृष्णसप्तम्या सोमवासरे साय श्रीमन्महाराज संस्कृतपाठशालाप्रासादे लौकिकवैदिकमहाशयसमलकृते सम्भावित ॥

स एष महाशय उदारेण धर्मप्रवणेन हृदयेन पाठशालाविद्यार्थिसाह्याय सहस्र रूप्याणि मूलधन दास्यामीति प्रत्यश्रृणोत् । तदानींतन तत्रत्यसभ्य महाशयहृदयानन्द पुन व्यञ्जयितु न खलु वयप्रभवाम. । एवमेतादृशमहाशयसरणिं प्रायेण पुरुषप्रवरा बहवोऽनुसरेयुरित इति बाढ विश्वसिम. ॥

॥ श्री. ॥

# श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिका.

प्रतिमासत्रय प्रकटीक्रियमाणा



"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः"

(ईशोपनिषत्)

संपुट-४] अक्टोबर् १९२८ [संचिका-४

लक्ष्मीकौस्तुभवक्षस मुररिपु शङ्खासिकौमोदकी
हस्त पद्मपलाशताम्रनयन पीताम्बर शार्ङ्गिणम् ।
मेघश्याममुदारपीवरचतुर्बाहु प्रधानात्पर
श्रीवत्साङ्कमनाथनाथममृत वन्दे मुकुन्द मुदा ॥

## कुन्दमालाविमर्श

लोकोत्तरवर्णनानैपुणीप्रकाशितमधुरिमधुरीणेषु सुकुमार मतीनामपि अमन्दानन्दसन्दोहतुन्दलीकरणधुरन्धरेषु काव्येषु सारम्येन सहृदयाना प्रवृत्ति समुचितेति सर्वप्राज्ञक्षुण्णेय सरणि । तत्रापि यशोद्रव्यव्यवहारशिवेतरक्षत्यादिप्रयोजन काव्यसाधारणमपि श्रव्यकाव्या-

पेक्षया दृश्यकाव्यस्य महत्तरत्वं प्रतिश्रुतं सहृदयवृन्दारकैः। तथा-चोक्तं भारतीये —

त्रैलोक्यस्यास्य सर्वस्य नाट्यं भावानुकीर्तनम्।
धर्मो धर्मप्रवृत्तानां कामः कामोपसेविनाम्॥
अर्थोपजीविनामर्थो धृतिरुद्विग्नचेतसाम्।
नानाभावोपसंपन्नं नानावस्थान्तरात्मकम्॥
लोकवृत्तानुकरणं नाट्यमेतन्मया कृतम्।
एतद्रसेषु भावेषु सर्वकर्मक्रियासु च॥
सर्वोपदेशजननं नाट्यमेतद्भविष्यति।
न तत् ज्ञानं न तच्छिल्पं नासौ विद्या न सा कला।
नासौ योगो न तत्कर्म नाट्येऽस्मिन्नयन्न दृश्यते॥ इति।

महाकविकुलतिलकः कालिदासोऽप्याह "कामं खलु सर्वस्यापि कुल-विद्या बहुमता, न पुनरस्माकं नाट्यं प्रति मिथ्यागौरवम्। तथाहि—

देवानामिदमामनन्ति मुनयः शान्तं क्रतुं चाक्षुषं
रुद्रेणेदमुमाकृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा।
त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते
नाट्यं भिन्नरुचेर्जनस्य बहुधाऽप्येकं समाराधकम्॥ इति।

"काव्येषु नाटकं रम्यम्" इति लौकिकानामाभाणकश्च। एवं च सहृदयहृदयावर्जकनाट्यप्रधानप्रबन्धनिर्मातृषु भास कालि-दास भवभूति प्रभृतयः पञ्चषा एव महाकवयः महाजनपरिग्रह-निश्रेणिकामारुक्षन्॥

प्रकृते च कुन्दमालाख्यनाटकस्य रचयिता दिङ्नागाचार्यः हेतुचक्रादिशास्त्रनिर्माणसमुद्भिन्नबुद्धिवैभवप्रकाशितसर्वतन्त्रस्वतन्त्रतागुण-गरिष्ठोऽपि समुचितललितसन्निवेशचारुसरसकाव्यनिर्माणनदीष्णतामासे-

दिवानिति हेन्न परमामोद । अनेन रचिता कुन्दमाला च भास-प्रणीतनाटककदम्बकोटीमाटीकत इति आधुनिकास्सकरताल प्रमोदन्ते॥

आदिमहाकविश्रीवाल्मीकिमुनिप्रकाशितश्रीरामायणप्रबन्धोपजीविषु श्रीरामपट्टाभिषेकान्तकथाप्रबन्धार बहव कवय समुपलभ्यन्ते। श्रीरामसबन्ध्युत्तरकथाप्रबन्धरचयितृषु द्वित्रा एव भवभूत्यादय कविपुङ्गवा अवर्तिषतेति लोकप्रथितोयमशः। प्रकृते च कुन्दमालारचयिता दिङ्नागाचार्यः श्रीरामस्योत्तरचरित भवभूतिवदारचयितुमयातिष्टेति कुन्द मालानिरीक्षणात् ज्ञायते। यद्यपि—

काव्येषु नाटक रम्य तत्रापि च शकुन्तला।
उत्तरे रामचरिते भवभूतिर्विशिष्यते॥

इति केचित्प्राचीना मुकुळितलोचना नरीनृतति। तथापि दिङ्नागाचार्यप्रणीता कुन्दमाला उत्तररामचरितात् नावरीणा इत्याधुनिका अभिप्रयन्ति। अत उत्तररामचरितकुन्दमालयो इतिवृत्तपात्रपरिग्रहवर्णनाशैल्यादिषु सालक्षण्यवैलक्षण्ये मूलानुसारेण यथामति सक्षेपतो निरूपयाम॥

अय च दिङ्नागाचार्य क्रिस्तीयपञ्चमशतकस्यादिमे भागे अवर्ततेत्याधुनिका विपश्चितो निश्चिन्वन्ति। केचित् क्रिस्तीयचतुर्थशतकस्योत्तरभागे अजनीनि निर्णयन्ति। अमु च दिङ्नागाचार्यं कालिदासकृतग्रन्थसामान्यदूषक, मेघसदेशीयचतुर्दशश्लोकस्थकोलचलमल्लिनाथसूरिविरचितव्याख्याप्रामाण्यत कालिदासकालिकमिति बहवो भाषन्ते। स च दिङ्नागाचार्यः कालिदासप्रबन्धगतान् विषयान् "अयमन्यत्रोक्तः, अन्यत्रोक्तोयमर्थः" इति स्थूलहस्ताभिनयै अदूदुषत्खलु। तादृशस्याद्रिकल्पस्य दिङ्नागाचार्यस्य प्राधान्य परिहर्तुं स्वप्रबन्धस्य अदृष्टचरसारस्वतसाराभिधायित्वमाश्रित्य मेघोपदेशव्या-

जेन कविपुङ्गवस्तमुपालभत। तत्सहाध्यायी सरसो निचुलश्च परापादितानां कालिदासप्रबन्धदूषणाना परिहर्ता आसीदिति तदीय श्लोकाभिप्राय अभिदधाति च ॥

क्रिस्तचतुर्दशशतकस्था मल्लिनाथसूरिण स्वापेक्षया शतकानां नवकात्प्राक् विद्यमान दिङ्नागाचार्यं कथ काळिदासग्रन्थान्दूषयन्त आज्ञासिषु । तत्र प्रमाण न किंचिदपि लिखितायिति केचन सशेरते ॥

वस्तुतस्तु–दिङ्नागाचार्यः कालिदाससमकालिक इति आधुनिकानामुद्घोष मिथ्यैव। यत कालिदासापेक्षया अर्वाचीनत्व दिङ्नागाचार्यस्य कैश्चिल्लिङ्गै· अध्यवसीयते। क्रिस्तीयप्रथमशतकस्थाश्वघोषप्रणीतबुद्धचरिताख्ये काव्ये कालिदासप्रणीतमहाकाव्यशैलीनामनुवर्तनात् क्रिस्तशकात्प्राचीनेन श्रीपतञ्जलिमहर्षिणा विरचिते महाभाष्ये "इह पुष्यमित्र याजयामः" इति प्रयोगेन च पुष्यमित्रपुत्राग्निमित्रसमकालिकत्वात्कालिदासस्य 'दिङ्नागसमसमयवर्तित्वकल्पन दु शकमेवेत्यभिप्रेम'। नच "दिङ्नागाना पथि परिहरन् स्थूलहस्तावलेपान्" इतिश्लोकस्थमल्लिनाथसूरिवचन प्रमाणमितिवाच्यम् । तत्र श्लोके दिङ्नागानामिति बहुवचनस्य स्थूलहस्तावलेपस्य च नातीवसामजस्य कल्पते। क्रिस्तीयद्वादश शतकस्थेन दाक्षिणावर्तनाथेन रचिताया मेघसदेशव्याख्याया लिखितमनुसृत्यैव मल्लिनाथसूरिणोऽन्वधादिषु । न तु तत्रस्थ यत्किंचित्प्रमाणवचनमप्युदाहार्षु. । क्रिस्तीयचतुर्थशतके स्थित' वसुबन्धुशिष्यः सवृत्तिकप्रमाणसमुच्चय-आलम्बनपरीक्षा त्रिकालपरीक्षा हेतुचक्र प्रभृतीना ग्रन्थानां रचयिता बौद्धमतावलम्बी दिङ्नागाचार्य. अन्य., कुन्दमालाख्यनाटककर्ता अन्य । कुन्दमालाप्रणेता धीरनाग इति अररालपुरेत्यत्र अनुराधपुरमिति (इद च सिलोंनदेशवर्ति) महीशूरप्राच्यकोशागारस्थलिखितपुस्तके पाठोपलम्भात् दिङ्नाग इति

सभावना मात्रमेवेति तत्वतो वेत्तु पार्यते । कुन्दमालाप्रणेतु. धीरनागम्य (दिङ्नागस्य वा) बौद्धत्व ग्रन्थतो निश्चेतु न शक्यते । अत. कालिदासदिङ्नागयोः विभिन्नकालिकत्व वक्तु युक्तमित्युत्पश्याम ॥

कुन्दमालास्थश्लोकाना दण्डिवामनाचार्यप्रभृतिभि स्वग्रन्थेषु अनुदाहरणात् ग्रन्थशैल्या प्राकृतशैल्याश्च प्राचीनतमत्वसदेहात् नव्यत्वकल्पनमेव न्याय्यमिति केचिदुत्प्रेक्षन्ते । ऊहकुशलाना बुद्धिः नैकविधेत्यल पल्लवितेन ॥

श्रीमान् भवभूतिमहाकविम्तु क्रिम्तीयसप्तमशतकम्यान्तिमे भागे यशोवर्मण सभायामासीत् । अय च अष्टमशतकम्थकाव्यालकारसूत्रकर्तृवामनाचार्यात्प्राचीन इति म्वरसतो ज्ञायते । यतोय वामनाचार्यः उत्तररामचरितस्थ ' इय गेहे लक्ष्मीरियममृतवर्तिर्नयनयो " इति श्लोक "दोर्दण्डाञ्चितचन्द्रशेखरधनु " इतिमहावीरचरितीयश्लोक चोदाहार्षीत् । एष च भवभूतिकवि स्व देश स्वकीय गोत्रादिक स्वस्य च पाण्डित्य मालतीमाधवादिग्रन्थेषु स्फुटमेवाभ्यधात् । यथा ' अस्ति-दक्षिणापथे पद्मपुर नाम नगरम् । तत्र ब्राह्मणा केचित्पङ्क्तिपावना. पञ्चाग्नय चरणगुरव. काश्यपा सोमपीथिन धृतव्रता उदुम्बरनामान प्रतिवसन्ति । तदामुष्यायणस्य तत्रभवतो भट्टगोपालस्य पौत्रः पवित्रकीर्तेः नीलकठस्य पुत्र' कविर्भवभूतिर्नाम जातूकर्णीपुत्र श्रीकण्ठपदलाञ्छनः पदवाक्यप्रमाणज्ञ ज्ञाननिधेर्गुरो. अधीतवेदवेदान्तसांख्ययोगादिशास्त्रश्च " इति ॥

दक्षिणापथश्च विदर्भदेशमारभ्य नन्दिदुर्गावसानो भूमिभाग । यत्सबधाद्वैदर्भी रीति. दाक्षिणात्यरीतिरिति काव्यादर्शादौ जोघुष्यते । पद्मपुरमपि पद्मावतीत्यपि व्यवाहारीत्युन्नीयते । यतो मालतीमाधवे प्रथमाङ्के " कुडिनपुरादिमा पद्मावतीं प्रहिण्वता सुविहितम् " इति नवमेङ्के

"पद्मावती विमलवारिविशालसिंधुपारासरित्परिकरच्छलतो बिभर्ति" इति च कविरेवाचकथत्। "वासवदत्ता च पित्रा सजयाय राज्ञे दत्त-आत्मानमुदयनाय प्रायच्छत्" इत्यमुना ग्रन्थसदर्भेण सुबन्धुरचितवासवदत्ताया परामर्शनात् सुबन्धोरर्वाचीन इति केचिद्विपश्चितो निश्चिन्वते। षष्ठशतकस्थममु च भवभूतिमहाकविं राजशेखरमहाकवि. स्वकृते बालरामायणनाटके—

बभूव वल्मीकभव कवि पुरा तत प्रपेदे भुवि भर्तृमेण्ठताम्।
स्थित पुनर्यो भवभूतिरेखया स वर्तत्ते सप्रति राजशेखर. ॥

इत्यमु महाकविं राजशेखरमहाकवि. महता गौरवेण प्रशशस। येन स्वत्मान भवभूत्यवतारान्तरत्वसभावनया पर भूमानमारोपयति—

तपस्वी का गतोवस्थामिति स्मेराननाविव।
गिरिजाया स्तनौ वन्दे भवभूतिसिताननौ ॥

इति पद्यप्रणयनात् श्रीकण्ठपदलाञ्छनस्याप्यस्य कवेर्भवभूतिरित्याख्याविरुदोपलब्धेत्यैतिह्यविदो जल्पन्ति। साधयन्ति च ईदृग्विधताम्। यथा कालिदासग्रन्थभूषयितु तत्सहाध्यायिनः कस्य चित्कवे.—

ससर्गजा दोषगुणा भवन्तीत्येतन्मृषा येन जलाश्रयोपि।
स्थित्वानुकूल निचुलश्चलन्तमात्मानमारक्षति सिन्धुवेगात् ॥

इति श्लोकग्रथनेन निचुलसज्ञा समजनि तद्वदिति। नवीनकविशेखरो नीलकण्ठदीक्षितोपि एन महाकविं—

प्राचेतसेन यानीता पालिता भवभूतिना।
सर्वतश्चर्व्यते वाणी सैवाद्य कविमानिभि ॥

इत्यादिना बहुमेने।

भवभूतिकवेर्वाच' स्वदन्ते रसरञ्जिताः।
सुमनोभ्य सुधास्यादिबन्धमाधुर्यबन्धुराः ॥

भवभूतिवचोगुम्भरसास्वादनचातुरी ।
यदि विद्येत केषां चिद्विरलाना विपश्चिताम् ॥

इत्यादिनाऽप्यन्ये रसिका बाढं प्रशशंसु । भवभूतिरेव—

उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥

इति ।

यद्वेदाध्ययनं तथोपनिषदां साङ्ख्यस्य योगस्य च
ज्ञानं तत्कथनेन किं न हि ततः कश्चिद्गुणो नाटके ।
यत्प्रौढित्वमुदारता च वचसां यच्चार्थतो गौरवं
तच्चेदस्ति ततस्तदेव गमकं पाण्डित्यवैदग्ध्ययोः ॥

इति च नैषधकर्तृश्रीहर्षवत् स्वात्मानमद्धा प्राम्तौदिति महाकवेरस्य पाण्डित्यं लोकातिशायीत्यध्यवसातुं शक्यते। इत्थं स्वस्य कुलस्य स्वाश्रयस्य राज्ञः स्वस्य देशस्य च कथनेन कविविषयकं सर्वं वृत्तं असंदेहेनैव ज्ञातुं शक्यत इति इयं पद्या अनवद्येतिकेचिद्दोषज्ञा आख्यान्ति। कालिदासभासप्रभृतयः स्वदेशकुलपाण्डित्यादिकं नावेदयन् । केवलं स्वस्वग्रन्थगौरवगुणेनैव परं माहात्म्यमापेदिरे । कुन्दमालाकर्ता दिङ्नागाचार्योऽपि (धीरनागः) भासनाटकचक्ररीतिमनुकुर्वाणः ग्रन्थस्थविषयगौरवान्वयव्यतिरेकि स्वगौरवमेव बहुमनुते । प्रस्तावनायां कथंचिदपि “ तत्रभवतोऽरालपुरवास्तव्यस्य कवेर्दिङ्नागस्य (धीरनागस्य) कृतिः कुन्दमालानाम” इत्यादिना किंचित्स्वनामदेशादिकं अभिव्यनक्ति स्म । यथा भासनाटकचक्रे प्राचीनताप्रकाशिका प्रसन्नोदारगम्भीरा सरसहृदयंगमा भाषाशैली अनन्यसामान्या, यथा च प्रस्तावनापदस्य स्थाने स्थापनापदस्य प्रयोगः, यथा च “ नान्द्यन्ते ततः प्रविशति सूत्रधारः ” इति आदावुपक्रम्य ततो मङ्गलपद्यलेखनं, तथैवात्रापि कुन्दमालायां

न्प्रतीक्षस्वेति लक्ष्मण नियोज्य श्रद्दधानाय तस्मै नृगनिमिप्रभृतीना पौरकार्यमननुयुजानाना कथा रामेण विस्तरेणावर्णि ॥

60—72 सर्गपर्यन्त ऋषीणा मुखात् मधुपुत्रेण लवणासुरेण क्रियमाणा प्रजापीडा श्रुत्वा तद्वधार्थ ससैन्यस्य शत्रुघ्नस्य प्रतिगृहीत लवणासुरहननोपयोगि सरहस्य मन्त्रास्त्रस्य नियोजनम् ॥

हत्वा च त तत्रैव राज्य कुर्विति पट्टाभिषिक्तस्य शत्रुघ्नस्य प्रयाणे निवृत्ते मध्येमार्ग वाल्मीक्याश्रमप्रवेश । तस्मिन्नेव समये रात्रौ सीता प्रासूत दारकद्वयम् । जातयोस्तयो रक्षोविनाशार्थ कुशमुष्ट्यग्राधोभागाभ्या प्रमार्जनस्य वाल्मीकिमहर्षिणा कृतत्वात् वृद्धाभिस्तापसीभि तौ कुशलवावित्याख्यातौ । (लूनकुशमुष्ट्यग्रभाग कुश इति अधोभागो लव इति च आख्यायते) तत शत्रुघ्न त हत्वा यमुनातीरवासिमुनीना आशी परम्परा प्रतिगृह्णान तत्रैव राज्यम शादिति ॥

73—82 सर्गपर्यन्त शबूकनामकशूद्रकृततपोज्वालया विप्रबालक मृत श्रुत्वा तद्वधार्थ पुष्पकमारुह्य अन्विष्य च त वने जघान राम । इन्द्रादिदेवताप्रसादेन मृत बाल पुनरुज्जीवय्य देवैस्सह अगस्त्याश्रम प्रविश्य तदनुग्रहात् दिव्याभरणानि प्रतिगृह्य अयोध्या प्रत्याजगामचेति कथा प्रास्तावि ॥

83—90 सर्गपर्यन्त अश्वमेधक्रत्वनुष्ठानार्थ सर्वेऽपि ससैन्या पार्थिवा साकेत वासिनो मुनय सानुचरा विभीषण सुग्रीव प्रभृतयः आकारिताः । आहूतानामेषा सर्वत परितोषणार्थं भरतनियोजन, यज्ञीयाश्वरक्षणार्थं लक्ष्मणस्य गमनम् । यज्ञे निर्वर्त्यमाने वाल्मीकिशिष्ययोः कुशलवयो तदाज्ञया तत्र रामायणकथागान, तथा रामस्याग्रेपि तन्त्रीलयसमन्वित लवकुशकृत मधुरगान, तत वाल्मीकिमहर्षिवचना-

त्सीता समागत्य सर्वस्याः परिषदोऽग्रे श्रीरामप्रत्ययार्थं—

यथाहं राघवादन्यं मनसापि न चिन्तये ।
तथा मे माधवी देवी विवरं दातुमर्हति ॥

इति संप्रार्थ्य पुष्पवर्षसमकालमेव पातालादुत्थिते सिंहासने उपविश्य प्रविवेश रसातलम् । 97—102 पर्यन्तसर्गेषु ततः सीता-दर्शनेनोद्विग्नमना रामो नान्यां पत्नीमवृणोत् । ईजे च बहुभिर्यज्ञैः, यज्ञेयज्ञे च पत्न्यर्थं जानकी काञ्चन्यभवच्च । ततः स्वर्गताना मातृ-णामौर्ध्वदैहिकं कृत्वा युधाजित्प्रार्थनया सपुत्रं भरतं प्रस्थाप्य तेन च सर्वतनामकं गन्धर्वं प्रमापय्य गान्धर्वदेशे गन्धारे तक्षशिलायां तक्षनामकं भरतपुत्रं अन्यं च तत्पुत्रं पुष्कलं पुष्कलावर्ते च पट्टा-भिषिक्तं भरतेनैव कारयित्वा लक्ष्मणपुत्रयोरङ्गदचन्द्रकेत्वोश्च अङ्गदी-यचन्द्रकान्तापुर्यो अभिषेचनं च कारयामास ॥

10३—111 सर्गपर्यन्तं ब्रह्मप्रेरितकालप्रार्थनया स्वर्गगमनोद्योगः मध्ये लक्ष्मणस्य निरुच्छ्वासतया देहत्यागः । ततो रामाज्ञया सुबाहुशत्रु-घातिनोः स्वात्मजयोः राज्यार्धं प्रविभज्य प्रदाय प्रस्थाय शत्रुघ्नः रामसमीपमागमत् । ततः दक्षिणोत्तरकोसलयोः कुशावतीश्रावस्त्योः कुशलवयोः पट्टाभिषेचनं, ततः सर्वपौरप्रार्थनया तैः सह विमानान्यरुह्य ब्रह्मलोकगमनमिति च कथा ॥

एवं स्थिते उभाभ्यामेताभ्यां कविभ्यां आदितः प्रभृति सप्तचत्वारिंशत्सर्गगता सपुत्रसानुजरावणकथा सुग्रीवादिकथा च अविशेषेणैव त्यक्ता । भवभूतिः परं तदनन्तरसर्गपञ्चकस्था सुग्रीवजनकमहाराजादि प्रस्थानकथां किंचित्प्रतिगृह्य प्रस्तावनायां "प्रेषिता हि स्वगृहान्महा-राजेन लङ्कासमरसुहृदो महात्मानः प्लवङ्गराक्षसाः सभाजनोपस्थायिनो

नानादिगन्तवासिनो ब्रह्मर्षयो राजर्षयश्च, यत्समाराधनाय इयतो दिवसानुत्सव आसीत्" इत्युपचिक्षेप। मध्ये च मातृणा पुरत सीतात्यागो न सभवतीत्यालोच्य—

वसिष्ठाधिष्ठिता देव्य गता रामस्य मातर ।
अरुन्धतीं पुरस्कृत्य यज्ञे जामातुराश्रमम् ॥

इत्यादिकथा स्वय सयोजयामास । जनकराजादयो यद्यपि चिरमयोध्या मध्यतिष्ठन्। तथापि तदैव सीता आपन्नसत्वा न जाता, किंतु—

तथा तयोर्विहरतोस्सीताराघवयोश्चिरम् ।
दशवर्षसहस्राणि गतानि सुमहात्मनो ॥
प्राप्तयो विविधान् भोगान् अतीता शिशिरागमा ।

इतिवचनात् बहुकालादनन्तर प्राप्तस्यसीतागर्भस्य अव्यवधानेन कथन, गर्भिणीं ता त्यक्त्वा केवल मातृणामेव गमनस्य कथन तथा -

देव्या अपि हि वैदेह्या सापवादो यतो जन ।
रक्षोगृहस्थितिर्मूल अग्निशुद्धौत्वनिश्चयः ॥

इत्यादिकथायोजन प्रस्तावनाया रुचिर न स्यादिति मत्वा कुन्दमालाया दिङ्नागाचार्येण स्थापनाया—

लङ्केश्वरस्य भवने सुचिर स्थितेति
रामेण लोकपरिवादभयाकुलेन ।
निर्वासिता जनपदादपि गर्भगुर्वी
सीता वनाय परिकर्षति लक्ष्मणोऽयम् ॥

इति सीतात्यागकथैवादावारब्धा ॥

भवभूतिस्तु राज्ञा प्रजानुरजन परम श्रेय इति वसिष्ठसंदेश मध्ये परिकल्प्य—

स्नेह दया च सौख्य च यदि वा जानकीमपि ।

आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा ॥

इत्याकस्मिकवचनद्वारा रघूणा प्रजारञ्जनमेव श्रेय इत्यादि रामप्रतिश्रव च सिद्धवत्कृत्य सीताविनोदनार्थं आलेख्यदर्शन तेन च पूर्वकथास्मरण, तदानीमेव दोहदत्वेन सीताभिलषित भागीरथीदर्शन निर्वे, र्तयितु रथमानयेति लक्ष्मण समादिश्य मध्ये दुर्मुखमुखात्पुरजननिष्ठ सीताविषयक वचनीय श्रुत्वा निर्विण्णस्सीता रामस्तत्याजेति कथा रामायणानुक्ता स्वेच्छया प्रथमाङ्के कल्पयामास ॥

दिङ्नागस्तु गम्भीरस्वभावोक्तिमधुराया अधुनातनाशिक्षणसम्कृतसुमनोमनोरञ्जिन्या मालतीमालाकल्पाया कुन्दमालाया “ सीता—वत्स लक्ष्मण अतिप्रवृत्ततुरङ्गमवेगकम्पितदेहा न पारयामि स स्थातु, किं पुनरवतरीतु, वत्स लक्ष्मण अतिशयितगर्भभरोद्वहन परिश्रान्ता न प्रभवतो मे चरणौ, तदग्रतो भूत्वा निवेदय कियद्दूरे भगवती भागीरथी वर्तत इति ॥

लक्ष्मण॰—निर्दिश्य अत्यन्त विश्रान्त मनुष्य सचारतया दुरवतारास्तटप्रदेशा, तस्मात्प्रसदमास्थाय सम्यक्—

वामेन नीवारलता करेण जानु समालम्ब्य च दक्षिणेन ।
पदेपदे मे पदमादधाना शनैश्शनैरेतु मुहूर्तमार्या ॥

सीता—वत्स सुष्ठु परिश्रान्तास्मि, एतस्या पादपच्छायाया मुहूर्तमुपविश्य विश्रमिष्यामीति लौकिकव्यवहारानुगुण्येन ४५—४८ सर्गगतान् वाल्मीकिप्रोक्तान् विषयान् अनुसृत्य प्रथमाङ्ककथा निबबन्ध । तथाहि वाल्मीकिरामायणे उत्तरभागे ४'१ सर्गे—

अह किल कुले जात॰ इक्ष्वाकूणा महात्मनाम् ।
सीताऽपि सत्कुले जाता जनकाना महात्मनाम् ॥

तत्र मे बुद्धिरुत्पन्ना जनकस्य सुतां प्रति ।
अत्रोषितामिमां सीतामानयेयं कथं पुरीम् ॥
प्रत्ययार्थं ततस्सीता विवेश ज्वलनं तदा ।
प्रत्यक्षं तव सौमित्रे देवानां हव्यवाहनः ॥
अपापां मैथिलीं प्राह वायुश्चाकाशगोचरः ।
चन्द्रादित्यौ च शंसेते सुराणां सन्निधौ पुरा ॥
ऋषीणां चैव सर्वेषामपापां जनकात्मजाम् ॥

इत्यादि वाल्मीकीयं विषयजातं मनस्याकलय्य दिङ्नागाचार्यः

तुल्यान्वयेत्यनुगुणेति गुणोन्नतेति
दुःखे सुखे च सुचिरं सहवासिनीति ।
जानामि केवलमहं जनवादभीत्या
सीते त्यजामि भवतीं न तु भावदोषात् ॥
ऋषीणां लोकपालानामार्यस्य मम जाग्रतः ।
अग्नौ शुद्धिं गता देवी किं तु लोको निरङ्कुशः ॥

सीता "अग्निशुद्धिसंकीर्तनेन प्रतिबोधितास्मि । रावणभवनं वृत्तान्तं पुनरप्युद्घाटयति, सीताया अपि नाम एवं सम्भाव्यत इति सर्वथाऽलं महिलात्वेन" इति वाल्मीकिमेवानुससार । तथा —

न खल्वद्यैव सौमित्रे जीवितं जाह्नवीतले ।
त्यजेयं राजवंशस्तु भर्तुर्मे परिहास्यते ॥

इति वाल्मीकीयं श्लोकार्थं —"सीता किं न खलु युक्तं मम आर्यपुत्रपरित्यक्तमात्मानं परित्यक्तुं किं न खलु तस्यैव निरनुक्रोशस्य समान एष प्रसवः प्रेक्षितव्य इति वचनीयं कण्टकोपहितं जीवितं परिरक्षामीति" कयापि वाचोयुक्त्या परिगृहीतः ।

तथा—

श्वश्रूणामविशेषेण प्राञ्जलिप्रग्रहेण च ।
शिरसा वन्द्य चरणौ कुशल ब्रूहि पार्थिवम् ॥
जानासि च यथा शुद्धा सीता तत्त्वेन राघव ।
भक्त्या च परया युक्ता हिता च तव नित्यश ॥
अह त्यक्ता त्वया वीर अयशोभरणा जने ।
यच्च ते वचनीय स्यादपवादसमुत्थितम् ।
मया हि परिहर्तव्य त्व हि मे परमा गति ॥
यथा भ्रातृषु वर्तेथा तथा पौरेषु नित्यदा ।
परमो ह्येष धर्मस्ते तस्मात्कीर्तिरनुत्तमा ॥

इत्यादि वाल्मीकिमहर्षिहृदयगमो भाव दिङ्नागाचार्येण "सीता— श्वश्रूणा पुन मम वचनात् पादवन्दन कृत्वा विज्ञापय, एवमह नीरक्षा श्वापदसमाकीर्णे वने प्रतिवसती सर्वथा हृदयेन आर्याभिरनुगृहीतव्येति । मम वचनाच्च जन विज्ञापय मन्दभागिनीमनुशोचन् वर्णाश्रमपरिपालनमभिन्नन्, आत्मान न बाधय । सद्धर्मे स्वशरीरे सावधानो भव । एवमपि त जन विज्ञापय, नयुक्त तव निरपराध इम जन सपदि हृदयतो निर्वासयितु किंपुनर्विषयत इति । एवमपि विज्ञापयितव्य सा तपोवनवासिनी सर्वथा सीमन्तनिहितेनाञ्जलिना विज्ञापयति यद्यह निर्गुणा चिरपरिचितेति वा अनाथेति वा सीतेति वा स्मरणमात्रकेणानुगृहीतव्या" इति सीतामुखेन समस्तसहृयहृदयाह्लादक वचनजात कीदृश परिपोषितमिति रसिका स्वान्ते जानन्तु ॥

भवभूतिमहाकविस्तु वाल्मिकीया रीतिं त्यजन्नपि राममुखेन सीतात्यागकाले अनिर्वचनीय रसिकजनोल्लासक श्रोतृजनलोचननिरर्गळनिर्यद्बाष्पसधुक्षितमनोवृत्तिशून्यतादेशक वचनजात—"रामः कष्ट-

मतिर्भीभत्मकर्मा नृशंस संवृत्त, योऽहम्—

शैशवात्प्रभृतिपोषिता प्रिया सौहृदादपृथगाशयामिमाम् ।
छद्मना परिददामि मृत्यवे सौनिके गृहशकुन्तिकामिव ॥

तत्कि अस्पर्शनीयपातकी देवीं दूषयामि । सीताया शिर स्वैरमुन्नमय्य बाहुमाकर्षन्—

अपूर्वकर्मचण्डाल अयि मुग्धे विमुञ्च माम् ।
श्रितासि चन्दनभ्रान्त्या दुर्विपाक विपद्रुमम् ॥

'हन्त विपर्यस्तस्म्प्रति जीवलोक, पर्यवसित जीवनप्रयोजन रामस्य, शून्यमधुना जीर्णारण्य जगत असारस्संसार कष्टप्राय शरीर, अशरणोऽस्मि कि करोमि क यामि, का गति, अथवा -

दु खसंवेदनायैव रामे चैतन्यमाहितम् ।
मर्मोपघातिभि प्राणै वज्रकीलायित हृदि ॥

हा अम्ब अरुन्धति हा भगवन्तौ वसिष्ठविश्वामित्रौ, हा भगवन् पावक, हा देवि भूतधात्रि, हा तात जनक हा तात हा मातर हा परमोपकारिन् लङ्कापते विभीषण हा प्रियसख, हा सौम्य हनूमन्, हा सखि त्रिजटे, मुषिता स्थ, परिभूता स्थ रामहतकेन, अथवा कश्च तेषामहमिदानीमाह्वाने—

ते हि मन्ये महात्मान कृतघ्नेन दुरात्मना ।
मया गृहीतनामानः स्पृश्यन्त इव पाप्मना ॥

योऽहम्—

विस्रम्भादुरसि निपत्य लब्धनिद्रामुन्मुच्य प्रियगृहिणीं गृहस्य शोभाम् ।
आतङ्कस्फुरितकठोरगर्भगुर्वी क्रव्याद्भ्यो बलिमिह दारुण क्षिपामि ॥

इत्यत कादम्बरीशैली मनुसृत्य किमपि समुल्लासयामास ॥

दिङ्नागस्तु वाल्मीकिना व्याख्यातं कमपि विषय सहृदयहृदया-

नदसदोहदायिन स्वग्रन्थे न्यभात्सीत्। यथा–सीता त्यक्त्वा निर्गमनसमये लक्ष्मण दिशोऽवलोक्य भोभो लोकपाला शृण्वन्तु भवतः—

ये केचिदत्र मुनयो निवसन्त्यरण्ये
विज्ञापयामि शिरसा प्रणिपत्य तेभ्य ।
स्त्रीत्युज्झितेत्यशरणेति कुलागतेति
देवी सदा भगवतीत्यनुकम्पनीया ॥

एषोऽञ्जलिर्विरचितो वनदेवताना विज्ञापना क्षणमिमामवधारयन्तु ।
सुप्ता प्रमादवशगा विषमस्थिता वा यत्नादिय भगवतीभिरवेक्षणीया ॥
सख्यो नद्य स्वामिनो लोकपाला. मातर्गङ्गे भ्रातर' शैलराजा ।
भूयोभूयो याचते लक्ष्मणोऽय यत्नाद्रक्ष्या राजपुत्री गतोऽहम् ॥

इति ॥ तथा प्रथमाङ्कान्ते—

सीता रुदन्तीं दृष्ट्वा ता तत्र वै मुनिदारका ।
प्राद्रवन् यत्र भगवानास्ते वाल्मीकिरुग्रधी ॥
अभिवाद्य मुने पादौ मुनिपुत्रा यहर्षये ।
सर्वं निवेदयामासु तस्यास्तु रुदितस्वनम् ॥

इत्याद्येकोनपञ्चाशसर्गस्थितविषयानुगुण्येनैव, वाल्मीकि ससम्भ्रमम्—

आकर्ण्यजह्नुतनया समुपागतेभ्य सध्याभिषेकविधये मुनिदारकेभ्य ।
एकाकिनीमशरणा रुदतीमरण्ये गर्भातुरा स्त्रियमतित्वरयागतोऽस्मि ॥

इत्यादि वाक्यजात समग्रथ्नात्। अङ्कान्ते च–वाल्मीकि अत्यन्तदु ख-सचारोऽय मार्गे विशेषत त्वा प्रति तद्यथायथा मार्गमुपदिशामि तथातथा समागन्तव्यम्—

एतस्मिन् कुशकटके लघुतया पादौ निधत्स्वाग्रत
शाखेय विनता नमस्व शनकै. गर्तो महान् वामत ।

हस्तेनामृश तेन दक्षिणगत स्थाणु नम माप्रत
पुण्येऽस्मिन् कमलाकर चरणयोनिर्वर्त्यता क्षालनम् ॥

इत्यादिना विषमगहनसचारमबाधस्फोरक परमकारुणिकवृद्धतापसजनोचितव्यवहारानुकूल गर्भिणीजनस्वान्तरञ्जक रसिकजनस्वान्तनितान्तसतोषावह पद्य लोकोत्तर निरमामीदिति सुधीयो विभावयन्ति ॥

स्वाश्रम प्रति वाल्मीकिमुनिना नीता सीता 'यद्यह सुखेन गर्भमभिनिर्वर्तयामि तदा तव दिनेदिने कुन्दमालया उपहार करोमि'' इति गङ्गा प्रार्थयमाना प्रसवानन्तर तथैव कुर्वत्यास्त । कदाचिल्लक्ष्मणसहिते रामे भगवतो वाल्मीके राश्रम प्राप्य गङ्गाया स्नाति सति सीतयोपहारीकृता कुन्दमाला रामपादसमीपमुपागमत् । रामस्तु ता दृष्ट्वा ''वत्स लक्ष्मण दृष्टपूर्वमिद कुसुमरचनाविन्यासकौशलम्, लक्ष्मण, क्व दृष्टम्, राम, क्व वा अन्यत्र ईदृशस्यावस्थान, ल—किं देव्या रा—अथ किम्, ल–गच्छत्वार्य इदमेव गोमतीतीर प्रति स्रोतोऽनुसराव'' इति तृतीयाङ्कस्थकथासदर्शनेन कुन्दमाला सीतारचिता सतीं राम प्रत्यभिजानादिति मृच्छकटिकावत कुन्दमालेति अस्यनाटकस्याभिधानमकारि कविना दिङ्नागाचार्येण ॥

भवभूतिस्तु उत्तररामचरितमित्येव प्रसिद्ध नामधेयमन्वसार्षीत् । अय च भवभूतिकविः श्रीवाल्मीकिकथितप्रजानुरजन सोदाहरण प्रदर्शित प्राधान्येनागृह्णात्, ऋषिगणप्रार्थनया लवणसुरवधार्थ शत्रुघ्नप्रेषण वाल्मीक्यभिहित प्रथमाङ्के समसूसुचत् । एतदुभय दिङ्नागकवये नारोचतेति प्रथमाङ्कविमर्शः सक्षेपतो व्यधायीति शम् ॥

---

## जीवन्मुक्तिपूजा *

सार्वज्ञ्यकामाय सर्गकथामेवमकरोत्पिशाच अध्ययनागारे —

गन्धर्ववृन्दानामनवरतप्रशस्ति· भगवत क्लान्तिजनककल्पाऽभूत्। न तेषा नुति योग्यो भगवान्? उत न स तेभ्य प्रददावत्यन्त सुखप्रबन्धम्? तिष्ठतु स विचार । अस्थानस्तुतिलाभस्य हिंसितशरीरिकृतनमस्यादिक चमत्कारितर भवेदिति सतर्क्य स्वगत विहस्य स देव सञ्चक्लृपे तदेतन्महानाटक प्रयोक्तव्यमिति ॥

'अगणितकल्पककाल मुधा तप्तोष्मगगनाङ्गणे बभ्राम । अन्ते आकृतिं प्राप । मध्यवर्तिद्रव्य नवग्रहान् विचिक्षेप । ग्रहास्तु शीतली बभूवु । सन्तप्यमाना समुद्राश्चुक्षुभिरे । दद्यमाना भूधराश्चकम्पिरे । अञ्जनपर्वताकार भरेभ्योऽभ्रेभ्यस्तप्तधारासपात नि सृत्य घनीभवद्भूरूपोष्म पिदधे । अथ चैतन्यस्यादिमाङ्कुर अध्याब्धि सजात । अथ सत्वर खगोलपाके पक्व वनस्पतिरूपेण पर्णमयगुल्मात्मना तथा अदनकदनसवनादिक्रियापटुजलजन्तुरूपेण च परिणत । एतन्नाटकसन्ताने क्रमशः एतेभ्यो जन्तुभ्य उदपादि मनुष्य ज्ञानशक्तिविशिष्ट धर्माधर्मविवे-

* लेखोऽयं बर्ट्रेंडरसल्नामकाङ्ग्लपण्डितरचित प्रबन्धस्य संस्कृतानुवाद । महाशयोय १८७२ तमेवत्सरे जात केम्ब्रिज्नगरे कृतविद्य गणिततत्त्वज्ञो दार्शनिकश्चाभवत्। शर्मण्यमहायुद्धात्पूर्वं केम्ब्रिज् विश्वविद्यानिलये दर्शनशास्त्राध्यापकोऽभूत्। आरब्धे महायुद्धे राजशासनानुरोधेन प्रसभं पुरजनसङ्ग्रहेण दिनेदिने चोपचिताया आङ्ग्लमहासेनाया अथ शान्तिकृते राजशासनविरोधा भवन् दशोत्तरशतेन यातित , केम्ब्रिजविश्वकलाशालया अपि निष्कासित ॥

अनेन दर्शनशास्त्रार्थशास्त्रगणितशास्त्राण्यनुबध्य अनेके ग्रन्था रचिता । आधुनिकेष्वाङ्ग्लगद्यरचनानिपुणेषु अग्रेसर इति बहुमन्यते ॥

चनपटु तीव्रतराराधनकामश्च । एषचावजगाम यदस्मिन्नुन्मत्तपैशाच-प्रपञ्चे सर्वं क्षणिक सर्वं सर्वात्मना यतते अप्रतिहतशासनस्य कालस्य सकाशात् क्षणकतिपयपरिमित अवस्थान संपादयितुमिति । एष उवाच—'अस्त्येव लोकयात्राया गूढार्थं अस्माभिर्दुरधिगमोऽपि । स च सदर्थ एव । यस्य कस्यचिदाराधनीयस्यावश्यकत्वात्, प्रत्यक्षकलिते प्रपञ्चे आराधनयोग्यस्य चासत्त्वात्' इति । एव पुरुषकारेण अक्रमात्क्रमस्सपादनीय इत्येवेश्वरसकल्प इति मत्वा मनुष्य प्रवाहान्निर्गत्य तटस्थोऽभूत् । यद्यन्निसर्गसुलभेन पशुधर्मानुरोधेन अकरोत् तत्तत्पापकर्मेति व्यपदिश्य क्षन्तव्यो मेऽपराध इति ईश्वर प्रार्थयाचकार । क्षान्तिप्रार्थनासाफल्याय च ईश्वरकोपाश्वासनप्रकार कश्चन भगवदिच्छानियमित कल्पयितव्य आसीत् । वर्तमानकाल दुष्ट विलोक्य त दुष्टतरमभावयत् आगामी काल उत्तमो भवतीतिमत्या । ससारसुलभसुखनिरपेक्षस्सन् ववन्दे देव तादृशसुखनैरपेक्ष्यशक्तिदम् । देवोऽप्यहसत् । वैराग्येण सेवया च शोधितपाप्मान नरमवेक्ष्य भगवान् प्रतिनव प्रचण्डसूर्यं विष्णुपदे प्रस्थाप्य नरलोकगोचर सूर्य नाशयाचकार । ततस्सर्वमिद जगत् पुनरूष्मदशा जगाम । अथजनान्तिकमुवाचेश्वर —'ओं' एतन्नाटकमतीव चमत्कारि' पुन पुन प्रयोक्तव्यम्'—इति" ॥

युष्मदस्मदभ्युपगमाय आधुनिकविज्ञानशास्त्रेण प्रतिपादितो लोकोऽपि उपरिससूचितपुराणप्रतिपादितलोकवदेव अर्थविधुर । ततोऽप्यनर्थभूत । एवभूते लोके आस्माकीनास्सकल्पा वर्धेरन् । उदर्कज्ञानशून्यै कारणैरारब्धा मनुष्यजातिरिति यत् तस्या जनिवृद्धिभयाशयप्रणयप्रतिपत्त्यादय केवलमकस्मादुद्भूतपरमाणुपुञ्जजनिता इति यत्, निरतिशयोत्साहशौर्यज्ञानच्छादिप्रकर्षोऽपि पुरुष मृत्युभयात्तारयितु न पारयतीति यत्, कल्पशतकलितनरकुलकार्यकलापा प्रकृष्टा प्रपाचि-

अशेषा सिद्धि मध्याह्नमार्ताण्डस्येव मानवमानसस्य प्रभाव सर्वमेतद्विली-येत ब्रह्माण्डमहाविनाशे इति यत्, अशेषमानुषानि श्रेयसमण्डप अवश्य भग्नब्रह्माण्डश्मशानभूमौ तिरोहित भविष्यतीति च यत्—सर्वमेतत्संशय-कोटिनिविष्टमपि प्रायेणैकान्तिकमेव येनैतत्प्रमेयपरीक्षणरहित दर्शनशास्त्र नार्हत्यवस्थातुम्। एतत्तत्त्वेन्द्रकोशानुरोधेनैव नैराश्याद्दढभूमावेव इत प्रभृति आत्महर्म्यस्य इष्टकान्यास कार्य। एवमुतरामस्निग्धे प्रतिकूले जगति कथ वा साधयेन्मनुष्य तपस्वी परतन्त्र जन्तुविशेष आत्मनी-नानभिलाषविशेषान्? परमगहन खलु एतद्यत्प्रकृति सर्वशक्ताप्यन्धा आकाशदरीषु निजससम्भ्रमभ्रमणमध्ये प्रासूत सुत स्ववशमपि सचेतन सदसद्विवेकिन अज्ञमातृचेष्टाविमर्शननिपुणम्। सत्यपि मरणे मातृ-प्रभावलिङ्गे अल्पेऽपि जीवितकाले मनुष्य स्वतन्त्र एव परीक्षणे विमर्शने प्रज्ञाने, स्वभावनया अन्यथाकल्पनाया च। परिचितप्रपञ्चे तस्यैवैतादृशी स्वतन्त्रता। एतस्यामेव तस्योत्कर्ष बाह्यप्रपञ्चनियन्त्रीणा शक्तीनामपेक्षया॥

क्रव्यादपि वयमिव प्रकृतिशक्तिवशवदता मनुभवत्येव। शक्ति-व्यतिरेकेण आराधनीय यत्किंचिदप्यपश्यन् एता पूजार्हा न वेति अविमृशन्नेव स्वमनीषाकल्पितदेवताना पुरत दण्डवत्प्रणमति। मर्म-भेदिनी भीकरा च कथा देवताराधनधिया कृताना नरयागप्राणिहिंसा-द्यकीर्तिकरक्रियाणाम्। स भयाद्वेपमान प्रपन्न समाधत्ते—अनर्घतमं वस्तु मया निवेदितमादरेण, शान्तरुधिराकांक्षा नकाक्षन्त्यपर किञ्चि-दपीति। परमार्थतस्तु एतन्मत आराधितदेवस्य आराधनीयताविमर्श-नाध्यवसायलेशमप्यसहमान दास्यदौर्भाग्यम्। धर्मस्वातन्त्र्य नाभ्युपगत क्रव्यादा। शक्तिः स्वैर पूजनीया। अकारणदुःखदायिन्यपि अनवरत-सम्भावनीया॥

तथापि क्रमश प्राप्ताया धर्मधीरतया धर्मगरीयस्ता प्रज्ञायते । अथावश्यकरणीयाराधन वर्बरकल्पितदेवताभिन्नाना देवतानामेव क्रियते । केचनधर्मोत्कर्ष जानन्तोऽपि तमुपेक्ष्य केवलशक्तेरेव पूज्यता वदन्ति । भगवच्छक्ति भगवज्ज्ञान च तेन प्रकटीक्रियते भगवत्सुगुणादिक न स्तूयते । आधुनिकेष्वपि एके यतो जयस्ततो धर्म इति कृत्वा अभ्युदय लिङ्गेन धर्ममनुमिमते । अपरे धर्मपरायणानामरुचिरे एतन्मते अरुचिं प्रदर्श्य पारमार्थिकव्यावहारिकलोकयो कश्चित्सूक्ष्मनराविरोध वदन्त. अस्मदाश्रुत धर्मपरायणपक्ष जिघृक्षन्ते । एव नरो बुद्धया कल्पयतीश्वर सर्वशक्तमपि सर्वधर्माधर भवद्भवितव्यनिगूढकरसताश्रयभूनम् । तत्त्वत. व्यावहारिको लोक न धर्माय । लोकानुगुणाया बुद्धया अस्ति निरसनयोग्या काचन दास्यवासना । कुत इति चेत् प्राय सर्वात्मना मनुष्यजनुष उत्कर्षवचन वरम् । अमानुषशक्तिविवशता तु न स्मारयितव्या । शक्ति प्रायेणाधर्म्येति धर्माधर्मज्ञानवान्मनुष्य तज्ज्ञानशून्ये जगति परवशपरमाणूपम इति च जाते अनुभवरस उदेत्येष द्वापर किं शक्ति पूजयाम? उत धर्मम्? किमीश्वरोऽस्ति धर्मविरुद्ध, आहोस्विदस्मद्धर्मबुद्ध्युत्प्रेक्षित? इति ॥

प्रश्नस्यास्य प्रतिवचन अतीव मुख्य समग्रामप्यनुष्ठानसरणिं विपरिणामयति । कार्लैल्नीजेत्यादिमहाशयकृतनक्षात्रतेज प्रशस्ति शक्तिपूजा च निष्ठुरे जगति सत्सकल्पपूरणासामर्थ्यस्य फलम् । शक्त्याराधनमधर्मघटदास्य सत्त्वप्रच्यावन च । यदि शक्तिरवश्य सभाव्येत तर्हि व्यवहार प्रायेणाधर्म्य इति ज्ञानस्य या विलक्षणा शक्ति ता शक्तिं बहुमन्यामहै । अभ्युपगच्छामस्तावद्यज्ज्ञातप्रपञ्चे सन्ति बहव पदार्था असमीचीना । अभीप्सितसदर्था अपि लोके दु:साधा एव चेति । सवर्धयामस्तावदस्मत्सभाजन परमार्थाय सौन्दर्याय मसारासुलभपूर्णदशायै

च। परमार्थादिषु मध्ये एकैकमपि मायामयप्रपञ्चस्यानभिमतमेव। हृद्-यान्निष्कासयामस्तावद्बलमधर्मैकप्रवणम्। अत्र वै मानुषस्वातन्त्र्यम्—स्वधर्माभिमानपरिकल्पितधर्मेश्वराराधनविधौ केवलकैवल्योपकारकसद्देव-ताप्रपत्तौ। कार्ये कामना च बाह्यशक्तिपरवशफलके स्त। भावना संकल्पादिषु वै स्वतन्त्रा वयं शत्रुमित्रोदासीनावशंवदा अबलकले-बरनाट्यरङ्गभूतभूग्रहाणुकानधीना यावज्जीवितममरणवशगाश्च। शिक्षा-महे तावत्तत्प्रत्ययद्रढिमानं य अस्मान् सततं धर्माङ्गणगोचरान् विधत्ते। सततं प्रत्यक्षधर्माणस्सन्तः कार्याङ्गणमवतराम। प्रथमं यदा बाह्याभ्यन्तरयोर्विरोधः स्वान्ते प्रतिभाति तदा स्वान्तस्वातन्त्र्यस्थापनाय कश्चन दुराग्रहः कश्चन प्रबलो देवताविद्वेषश्च जायते। मुमुक्षूणां सर्वेषां कर्तव्यमिदं—यत् विमुखीभूतविधेरवज्ञानं, अधर्मस्यानवरतं विद्वेषणम्, समत्सरप्रबलशक्तिप्रहितदुःखसहनं च। वस्तुतस्तु अव-ज्ञानादिकमपि बन्ध एव, यतस्तदधर्मसंवलितं प्रपञ्चं ज्ञानस्य विषयं करोति। प्रपञ्चविरोधसंरम्भे अस्ति कापि प्रवृत्तिः मुमुक्षोर्जेया। क्रोधो ज्ञानस्य पराभवः न त्विच्छायाः। कर्मयोगिनां सुखबीजं स्वातन्त्र्यं इच्छास्कन्दनजनितं न तु भावनापराभवजनितम्। इच्छास्कन्दनेन जन्यते विरक्तिः, भावनाजयेन जन्यते कलाविलासः दर्शनविन्यासः रसास्वादश्च येनान्ते अजय्यं जगज्जयामः। रसास्वादोऽपि साध्यः अकामहतस्य प्रतिभाशालिन एव नेतरस्य। एवमिह तेषामेव स्वातन्त्र्यं ये संसारे क्षणिकानां कतिपयभोगसामग्रीणां अनर्थिनः॥

विरक्तेरावश्यकता यद्यप्यधर्मशक्त्यस्तित्वलिङ्गं तथापि क्रिस्त-मतं विरक्त्युपदेशे अधर्मविद्वेषणापेक्षया किंचित् पाण्डित्यं व्यनक्ति। ऊरीकर्तव्यमेवैतद्यदस्मदभीप्सितपदार्थानां केचनानवाप्या अपि धर्मो-पकारकाः इतरेपुनर्नतथा अपूर्वोपकारिणः। परित्याज्यं यत्तदधर्म्य-

मेवेति मतिर्जातुचिदप्रमापि अशृङ्खलरागिमतानुरोधेन न सर्वदा केवल भ्रम एव। किंच न कदाप्येष भ्रम इति साधयन्ती आस्तिकता विविध-निगूढतत्त्वप्रकाशनद्वारा चित्तशुद्ध्यै कल्पते ॥

अस्त्यन्योऽपि शोभनाश विरक्तौ। अपूर्वोपकार्यपि वस्तु दु साध चेन्नातीव काङ्क्षितव्यम्। जायते हि नैष्ठिकविराग' सर्वस्मिन्नपि जने आशु वा मन्द वा। बालकाना न किंचिदप्राप्य प्रतिभाति। सयत्नमपेक्षितमप्यनवाप्य वस्तु अगोचरमेव तेषाम्। अथापि देहपातात्, रोगात् दारिद्र्यात् प्रभुसम्मितविधिशासनाच्चास्माकमेकैकोऽपि अवगच्छेन्न हीद विश्वमस्मदर्थ विनिर्मित, अस्मत्समीहितवस्तूनि सर्वथा समीचीनान्यपि दैवेन प्रतिरुध्येरन्निति। प्राप्तायामापदि अचलितचेतसा आशानाशसहन, निरर्थकानुशयाच्चित्तप्रत्यायन च धीराणा लक्षणम्। एतावन्मात्रवशवर्तिता विधे न केवल न्याय्या अपि तु विज्ञानस्यातिपन्था ॥

केवला विरक्ति न पर्याप्ता सामग्री पुरुषार्थसाधने। केवल-विरक्त्या न मोक्षमण्डप निर्मातु शक्यते। अस्ति मोक्षसूचना भावना-प्रपचे, सगीतशिल्पयो, शान्ते दर्शनप्रपञ्चे, उज्वलकविताया च यत्र रस प्रकाशते दूरे दु खत्रयाभिघातात्, दूरे परिणामभयात्, दूरे ससारशोकमोहादिभ्य'। एतत्प्रमेयचिन्ताया मानसे आनन्द आविर्भूय ससारस्वरूपविमर्शनपटिमान मुक्त्युपकारिसामग्रीसंग्रहसामर्थ्य च जनयति ॥

प्राङ्मुक्तिमण्डपप्रवेशात् अन्धतमस तरेत् नित्यशुद्धपुरुषानन्तरा पापविद्धपुरुषास्सर्वे। निर्वेदोऽन्धतमसस्य द्वारम्। भग्नाशोपलनिबद्धं तस्य कुट्टिमम्। अहकारस्तत्रहीयेत। अनियततृष्णावेगस्तत्र शाम्येत। एव हि पुरुष विधिसाम्राज्यतो मुच्येत। ततोविरक्तिद्वारेणान्धतमसा-

द्बहिर्नीयते पुरुष । अन्ते स प्रविशति ज्ञानप्रभाकरविभ्राजमानमुद्देश यत्र काचन प्रतिनवप्रज्ञा कश्चननूतनानन्द किंचन नवीन वात्सल्य च मुमुक्षुहृदय विकासयति ॥

ससारविद्वेषवैफल्यजनितनिर्वेदमन्तरेण विधिसाम्राज्यवशे वर्तमाना अपि अचेतनप्रपचमनाराधनीय यदा मन्यामहे तदा शक्नुयाम बुद्धौ अविद्यामय विश्व तथा विपरिणामयितु यथा मृन्मय जगत् हिरण्मयमिव भासते । बहुविधवस्तुपदे लोके—भूधरजलधरद्रुमाकृतिषु मानुषजीवितचरितेषु, कालस्य अप्रतिहतशक्तौ च पश्यत्येव समग्र सौन्दर्यं प्रौढभावनासरणि । एव प्रकृतेरन्धकविलासोल्लासे पुरुष निगूढ किंच न स्वाम्य तनुत एव । विषयो यथायथा अधर्म्यतर अनियतेच्छाप्रतीपश्च तथातथा अधिकतरो विजयस्तस्य तथाभावितचेतनस्य सिकताभिरिव तैल लभमानस्य निर्जितप्रतीपशक्तिविवर्धितनिजबलौघस्य ॥

सर्वकलासु नायकवधान्त रूपक (Tragedy) प्रौढतम विजयते । तत्रहि पुरुष भास्वर स्वशिबिर आरिराज्यमध्ये शिखरीशिखर मविरुद्ध निर्माति । तस्य दुर्गमे प्रेक्षणस्थाने अरे कटका आयुधशाला श्रेणी दुर्गाणि च प्रत्यक्षीभवन्ति । शिखरप्राकारेषु स्वतन्त्रजीवित प्रसरत्येव । दु खमरणनिर्वेदादिचमू. विधिचक्रवर्त्युपजीविसेनान्यश्च अभीतशिबिरवासिनामभिनवमनोहरदर्शनीया भवन्ति । धन्य तच्छिबिर धन्यतमास्ते शिबिरवासिन उच्चैश्शैलशिखराश्रयाः । यशस्तेषा भटानां ये कल्पशतसमरान्ते अमोघ स्वातन्त्र्यरत्न ररक्षु । वैरिजनादूषित च चक्रु.स्वतन्त्रपूरुषपरमधाम ॥

दु.खान्तरूपक लोके यावत्तावन्मात्रेण सदा सर्वत्र सन्तमेव गुण स्फुटयति । मृतदर्शने, दु सहदु.खानुभवे, गतस्य।पुनरावृत्तौ च अस्ति

काचन पवित्रता, भयानकता, जगद्मेयमायानुभवश्च। तत्र अनुभूयते कश्चन दुःखपाणिपीडनमहोत्सव। मसरी शोकबन्धैर्लोकेन सह निबद्धयते। एवभूतसमाधिकाले क्षणिकसुखाशा क्षीयते। अवसीयते अल्पप्रयोजनाप्रवृत्ति। ह्रीयते परामर्शः प्रतिदिनजीवित पर्वतीकुर्वता तृणतुलितवस्तुजातानाम्। परस्परप्रीतिप्रदीपकदीपितजीवितपोत समन्तात् कालसागरो दृश्यते यस्योत्पतद्भ्रमध्ये क्षणद्वयमितस्ततो विकीर्यामहे वयम्। अस्मदुडुपे वाति शीतप्रवात कालिमाद्भुत। अतिघोरबल मध्यप्रक्षिप्तस्य मनुष्यजातस्य विवशता एकस्या समुपचीयते व्यक्तौ असहायामपि यावद्धैर्य यतमानाया शत्रुप्रपञ्चमध्ये अवस्थातुम्। धर्मार्भि महायोधने विजय यशःकायाना मुक्तचेतसा सगाय कल्पते, जीवितसौन्दर्याय च॥

आत्मजगतोर्युद्धेन वैराग्य विज्ञान, दाक्षिण्य च जायते। जातेष्वेतेषु प्रारभ्यते पुरुषस्य द्वितीय जन्म। एष जय यत्र लीलासामग्रीकृतपुरुषा अप्रतिहतप्रकृतिशक्तय—जननमरणे भूतस्यापुनरावृत्तिता, शून्याच्छून्यधावति जगति पुरुषस्यातन्त्रता इत्यादय—विज्ञायन्ते स्वीक्रियन्ते च॥

अतएवातीत अतिमनोरमम्। निश्चलनीरवा अतीतचित्रलेखा शोभते तुलिता शरच्चित्रवनपर्णेन अनुत्कटफूत्कारादपि पतनशीलेन दशदिशोऽपि चामीकरमयीरिव कुर्वता। अतीतो न विक्रियते। अतीतो न पुन प्रवर्तते। नीरोग पुरुष इव सम्यक् स्वपिति भूतकाल। अतीतविषये विलीनौ कामलोभौ। लघु क्षणिक च यत्तत्तिरोहितम्। यत्तु श्रीमत् शाश्वत च तदेव भ्राजते तारकमिवरजन्याम्। अतीतस्य सौन्दर्यमसस्कृतचेतनस्य दुःसहम्। निर्जितविषयेस्तु तद्धर्मद्वारम्॥

आपातत अल्पीयास एव पुरुषप्राणा मध्ये प्रकृतिशक्तीनाम्। काल विधिं अन्तक च दासवदनवरतमाराधयेत्स। तस्य-शक्त्यपेक्षया पटीयासि तानि। तस्य चिन्तितव्या विषया सर्वे अपि तदुपहतिविषया एव। यद्यपि महत्य शक्तय तासा महत्वग्रहण तासामन्घवैभवनिर्वर्णन महत्तरम्। तादृश निर्वर्णन मोचयत्यस्मान्। मा तावदित पर प्राच्यपारतन्त्र्यानुरोधेन विधे पुरत दण्डवत्प्रणमाम। किन्तु विधिं सुसभाव्य अङ्गीकरवाम। मात्स्यन्यायपरित्याग, क्षणिक सुखकामनानिरसन, निरन्तरानिरन्तरायलिप्सा—एषा वै मुक्ति। एतन्मुक्तकृताराधनम्। विधिनिध्यानेन लभ्येय मुक्तिः। जितो हि विधि कालपरिपाकमन्तरा यत्नपूतेन चेतनेन॥

मर्त्यलोकेन सह समाननिधनरूपपटुतरपाशपिनद्धोऽपि मुक्त पुरुष वेत्ति प्रतिनवा सिद्धिं, सदापार्श्ववर्तिनीं आर्द्रयन्तीं च दैनिक-कार्यजातमनुकम्पारसेन। पुरुषायुषमन्धतमसे दूराध्वगमनम्। परोक्ष-शत्रुभिरास्कन्दितम्। अव्खेदेन भग्नम्। गम्यस्थान न सर्वेषा सुलभम्। न तत्र कोऽपि चिरायाटितुमलम्। मध्येमार्गमेकैकशो नो मित्राणि तिरोधीयन्ते कृतान्तरह शासनगृहीतानि। क्षण एव तेषा सुख दु ख वा निश्चीयत। कुतस्तेषा साहाय्यम्। तथापि विज्ञानदीपदानेन तेषा पन्थान आलोकयाम। अनुकम्पारसपायनेन तेषा क्लेश लघूकरवाम। अविरतवात्सल्येन तान् मोदयाम। उपहते धैर्ये तानुद्धराम। उदिते निर्वेदे तान् सान्त्वयाम। मा तोलयाम मात्सर्येण तेषा गुणदोषौ पुण्यपापे वा। किन्तु विमृशाम तेषा-मनुपपत्ती तेषामनन्तदु.ख हेतुभूतमज्ञान च। सदास्मर्तव्यमस्माभिर्यत्ते समाने अन्धतमसे वयमिव दु खिन. वयमिव कुशीलवा दु खदुर-न्तनाटके। एवमवमितेऽवधौ विरतयोरपि कालचित्रार्पितत्वान्नित्यता

गतयो पुण्यपापयो तेषा विषये प्रभवेम वक्तु यत्—नतावद्वयमेषा दु:खेषु कारणमभूम किन्तु यदा यदा एषा हृदयकमल भगवत्प्रकाशेन विचकास तदातदाम्म सहाया प्रोत्साहनेन स्थिरधीरवचनपुरस्सर महानुभूतिप्रदर्शनेन ॥

क्षणिक परतन्त्र च पुरुषायुषम् । काले सन्निहिते सर्वषामपि गले पतत्येव कालधर्मपाश । धर्माधर्मज्ञानशून्य प्रध्वसलील ऊर्जस्वल काल निर्वण त्वरयति अथ बन्धुमित्रकलत्राणि पश्चात्तार्मायासु । श्व आत्मबान्धनामित्र प्रविशेत । एव स्थिते प्राक्प्राणापायात् उद्दामविज्ञानमेववरम् । नियतिभय विधूय निजनिर्मितमुक्तिमण्डपे आत्माराधन वरम् । दलित्वा मायामाम्राज्य व्यवहारपारवश्यदु खात् स्वान्तमरक्षण वरम् । पुरुषकृतखण्डनमण्डनादिक सहमाना प्रबलशक्तीस्तृणीकृत्य वर स्वमनीषाप्रपचस्य शेषवद्धारण मायासेनाप्यविरामेण ॥

**योगनरसिंहार्यः**

अस्मिन् विभवसंवत्सरे श्रावणभाद्रपदमासयोः श्रीमन्महाराज-संस्कृतमहापाठशालायां मैसूरु संस्थानविद्वत्परीक्षामहासभानिर्णयानुसारेण सकलशास्त्रविद्वत्परीक्षा प्रावर्तत । तदनुबन्धी संस्कृतपाठशालाविद्या-गणपति महोत्सवः समादरेण महाजनानां उपन्यासेन विदुषा वाक्यार्थेन विद्यार्थिनां संगीतेन च रसिकानां महता संभ्रमेण निर्वर्तितः ॥

तत्रान्तरे यैर्महाशयैः विद्वद्वरैः उदारेण मानसेन विरचिता उपन्यासाः तादात्विकसहृदयसंतोषप्रदाः तेषां सारांशः क्रमशः पत्रिका-यामस्यां कालदेशविप्रकर्षवतां महतामपि प्रमोदाय प्रदर्श्यन्ते—

## उपनिषत्सारार्थः

---

जन्तूनां नरजन्म दुर्लभमतः पुंस्त्वं ततो विप्रता
तस्माद्वैदिकधर्ममार्गपरता विद्वत्त्वमस्मात् परम् ।
आत्मानात्मविवेचनं स्वनुभवो ब्रह्मात्मना संस्थितिः
मुक्तिर्नो शतकोटिजन्मसु कृतैः पुण्यैर्विना लभ्यते ॥
चतुरधिकाशीतिलक्षमितेषु जन्मसु मानवजन्मैव ।
मान्यं यत्र किल बुद्धिरनन्यसाधारणी प्रचकास्ति ॥

अन्यत्रापि जन्मसु शरीरमात्रावनप्रयोजनिका बुद्धिर्वेविद्यत एव तथापि उत्कृष्टजनुरुत्तरप्राप्तिसाधनावलम्बिनी बुद्धिर्मानवजन्मन्येवेत्ययं विशेषः । मानवजन्मन्यपि पुंजन्म प्रशस्यते स्त्रियस्तु रागद्वेषेर्ष्याकलु-षिता इत्येतद्विदितचरमेव सर्वेषां संसारव्यापृतानाम् । दुर्लभं मानुषं जन्म लब्ध्वा अत्रैव संपादनीयं आत्मानात्मविवेचनं कुर्यात् ॥

किमिदं आत्मानात्मविवेकः कर्तव्य इत्यपूर्वतया उपन्यस्यते विजानात्येव सर्वो लोकः पश्यन् तिष्ठन् व्यवहरमाणोऽहमहमिति

यस्तु अहमिति व्यवह्रियते स आत्मा यस्तु इदतया व्यवह्रियते अनात्मा स इति निश्चितं किं विचारणयेत्याशङ्का समुन्मिषति यद्यपि। भवेदेतदेव यद्येकमेव वस्तु अहमिति निश्चिनुयात् न तु तथा यत चक्षु श्रोत्रादीनि परस्परागृहीतग्राहीणि स्फुटतर पृथक्त्वेन निश्चीयमानानि अह पश्यामि अह शृणोमि अह स्पृशामि इति एकवाचिना अह-शब्देनाभिदधाति। यस्तु त्वदालय कुत्रेति पृष्ट सकलानपि आलयान् मदीयानाचष्टे न स प्रामाणिकपदवीमध्यारोहति अपितु नियत य कश्चिदाचक्षाण एव अतोविचार्य एवाहपदार्थ आत्मा तत्र परिदृश्यमानस्य स्थूलवपुषोऽहमर्थत्वे स्वप्ने यत्किंचित्कोणे शयान एवास्मिन् शरीरे काश्यादिक गतमिव जानात्यहमर्थम। इन्द्रियाणा तथात्वे सकलाना मिलितानामेव तथात्व उत एकैकस्येति विवक्तव्य मिलितानामेव तथात्वे एकस्येन्द्रियस्य नाशे आत्मनोऽपि नाशप्रसग तादृशमेलनस्य तदानीमभावात् एकैकस्य तथात्वे चक्षुषा दृष्ट चक्षुरपगमे नानुस्मरेत् द्रष्टुरभावात् अनेकेषा भिन्नाभिप्रायाणा इन्द्रियाणा नियतृत्वे नियम्य शरीरमुन्मथ्येताऽपि। मनस आत्मत्वे सुषुप्तौ मनसो लयेनात्मनोऽपि लयप्रसगेन सुखमस्वाप्समिति कोनुसदधीत। प्राणस्यात्मत्वे आबाल प्रसिद्ध प्राणवायोरहमर्थधायत्व विरुध्येत। अपि च स एव शरीरेन्द्रियमनसामधिपतिरिति अधिपतिकार्य यत् भृत्यान्कार्ये विनियुज्य स्वय तूष्णीमवस्थान तत् विरुध्येत. यत स्वपत्स्वपि इन्द्रियेषु प्राणवायुर्भृत्यवत् सतत पर्यटति। एव अहत्वेन व्यवह्रियमाणेषु आत्मा कोऽपि नेति निश्चिते दृश्येभ्य एतेभ्योऽनिरिच्यमान यत् दृष्टस्वरूप विभाति तदेव आत्मा। तादृश वस्तु अवश्यमभ्युपेय देहेन्द्रियमन प्राणा दृश्या एव मम देह मम चक्षु मम मन मम प्राणा इति वेद्यतयाऽनुभूयमानत्वात्।

अत्रार्थे श्लोक —

दृश्य यद्रूपमेतद्भवति च विशद नीलपीताद्यनेक
सर्वस्यैतस्य दृग्वै स्फुरदनुभवतो लोचन चैकरूपम् ।
तद्दृश्य मानस दृक्परिणतविषयाकारधीवृत्तयोऽपि
दृश्या दृग्रूप एव प्रभुरिह स तथा दृश्यते नैव साक्षी ॥

इति । लोके उष्ण जल दग्धृ दाह्य च भवति। एव सूक्ष्मेंधनरूपागारा अपि अन्यत् दहति दह्यते च वह्निना। वह्निस्तु दग्धैव न दाह्य कदापि केनचिदपि तद्वत् चक्षुर्नीलपीतादिद्रष्टृ मनसा दृश्यते मनोऽपि बुद्धिवृत्तिभि दृश्यते बुद्धिवृत्तीनामपि द्रष्टा साक्षी एक । स नान्येन केनचिदपि दृश्यते तादृश द्रष्टृवस्तूनामवधिभूत अगीकरणीय तदेव आत्मा तदेव ब्रह्म। तच्च सच्चिदानदरूप एतस्यैवानदस्य लवा ससारसुखानि एतस्यैवानदस्यान्यानि भूतानि मात्रामुपजीवति" इति श्रुति वक्ष्यमाणयुक्तयश्च एतमर्थमुपोद्बलयति ॥

तथाहि-लोके सर्वैरनुभूयमान आनदो विषयैरभिव्यज्यते वा जन्यते वा इति विमर्शनीय, तत्र विषयैर्जन्यते इत्यवगच्छाम यत् आ पडितेभ्य आच पामरेभ्यो जना सुखानुबुभूषया स्रक्चदनवनितादीन् विषया नेवोपाददत। स्वमेव सुख यदिस्यात् किमिति अनेकक्लेशसकुलान् विषयान् अभिलष्येयु. । अभिव्यक्त्यर्थ विषयापेक्षेत्यपि वक्तु न शक्यते नित्यस्य स्वस्वरूपसुखस्याभिव्यक्तौ प्रतिबधकाभावात् इत्याशकाया स्वरूपसुखमेव विषयैरभिव्यज्यते इत्यमुमेव पक्ष सुष्ठु साधयाम स्वरूपसुखस्याप्यनभिव्यक्तौ माया तत्कृता तृष्णा च निदान अत एव तैत्तिरीयश्रुति सार्वभौमादिहिरण्यगर्भावधिशतशतगुणा-नानदानभिदधाना प्रतिपर्याय अकामहतानुभाव्यमानदमतर्भावयति । आनदा विषयैरेव ज्ञायेरश्चेत् अकामहतस्य सार्वभौमादेरिव

स्रक्चन्दनादिविषयाभावेन कथं तादृशसुखानुभवः श्रूयते । लोकेऽपि विषयलाभो विषयावलम्बिनीं तृष्णां शमयन् स्वरूपसुखमेवाविष्कुरुते एतस्मिन्नर्थे श्लोकाः ॥

आत्माऽस्यैकः सुखात्मा स्फुरति तदपरा त्वन्यथैव स्फुरन्ती
स्थैर्यं वा चञ्चलत्वं मनसि परिणतिं याति तत्रत्यमस्मिन् ।
चाञ्चल्यं दुःखहेतुर्मनस इदमहो यावदिष्टार्थलब्धि
तस्या यावत् स्थिरत्वं मनसि विषयजं स्यात्सुखं तावदेव ॥
यद्वत्सौख्यं रतान्ते निमिषमिह मनस्येकताने रमे स्यात्
स्थैर्यं यावत्सुषुप्तौ सुखमनतिशयं तावदेवाथ मुक्तौ ।
नित्यानन्दः प्रशान्ते हृदि तदिह सुखस्थैर्ययोः साहचर्यं
नित्यानन्दस्य मात्राविषयसुखमिदं युज्यते तेन वक्तुम् ॥
विषयेष्वपि लब्धेषु तदिच्छोपरमे सति ।
आत्माभिमुखधीवृत्तावानन्दः प्रतिबिम्बति ॥

इति । विषयैरानन्दो जायते तमेवानुबुभूषतीति वदन् प्रष्टव्यः गीतनृत्य-वनितादिसकलविषयसमाकुलोऽपि राजा जामाता वा समस्तानपि विषयान् त्यक्त्वा किमिति निद्राकालेऽनुभाव्यं स्वरूपसुखमेवाभिलक्ष्य धावतीति—निद्राकालेऽनुभूयमानं सुखं विषयानुबन्धि न भवति विषय-रहितोऽपि एकः सुप्तोऽस्थित एतावन्तं कालं सुखमन्वाप्समिति अनुसंधत्ते मृदुशय्यादिसुखं निद्रासुखमयोजयति न तु शय्यादिना निद्रासुखं जन्यते । एतदर्थे श्लोकाः —

जाग्रत्यामन्तरात्मा विषयसुखकृतेऽनेकयत्नान् विधास्यन्
श्राम्यत्सर्वेन्द्रियौघोऽधिगतमपि सुखं विस्मरन् याति निद्राम् ।
विश्रामाय स्वरूपे त्वतितरसुलभं तेन चातीन्द्रियं तत्
सौख्यं सर्वोत्तमं स्यात् परिणतिविरसादिन्द्रियोत्थात्सुखाच्च ॥

पक्षावभ्यस्य पक्षी जनयति मरुत तेन यात्युच्चदेश
लब्ध्वा वायु महात श्रममपनयति स्वीयपक्षौ प्रसार्य ।
दु सकल्पै विकल्पै र्विषयमनुकदर्थीकृत चित्तमेतत्
खिन्न विश्रामहेतो स्वपिति चिरमहो हस्तपादान् प्रसार्य ॥
आश्लिष्यात्मानमात्मा न किमपि सहसैवातर वेदबाह्य
यद्वत्कामी विदेशात्सदनमुपगतो गाढमाश्लिष्यकाताम् ।
यात्यस्त तत्र लोकव्यवहृतिरखिला पुण्यपापानुबन्ध
शोको मोहो भय वा समविषममिद नस्मरत्येव किंचित् ॥

चित्त यदा कार्यातरे व्याप्रियते तदा मिष्टान्नसवीतवनितादौ सन्निहितेऽपि नानुबुभूषति तत्सुख असत्यपि उक्ते विषयजाते शाते मनसि सुखमनुभूयते अत एव भगवान् पापठीति—

ये हि सस्पर्शजा भोगा दु खयोनय एव ते ।
आद्यतवत कौतेय न तेषु रमते बुध ॥

अशातस्य कुत सुख इति—

अविषयस्य कुत सुखमिति नावदत् ।
सुखमात्यतिक यत्तत् बुद्धिग्राह्यमतीन्द्रियम् ।
यलब्ध्वा चापर लाभ मन्यते नाधिक तत ॥
यस्मिन् स्थितो न दु खेन गुरुणापि विचाल्यते ॥

इति । स्वस्वरूपमेव सुख अत्यादरेण शसति । अन्यदप्यालोच्यता— विद्यमानेऽपिविषये साधुत्व कदाचिदनुसदधाति जनुभवति च सुखम् । कदाचित् तस्मिन्नेव विषये असाधुतामनुसधाय नानुभवति सुख अत एव भर्तृहारि प्राह—

वयमिहपरितुष्टा वल्कलैस्त्वदुकूलै
समइह पारितोषो निर्विशेषो विशेष ।

स तु भवतु दरिद्रो यस्य तृष्णा विशाला
मनसि च परितुष्टे कोऽर्थवान् को दरिद्र ॥

यथा हि कश्चित् श्वा आर्द्रमस्थि खादन् निर्भिन्नसृक्विविनि सृत स्वीयमेव रुधिर अस्थिविनि सृतमिति भ्रमन् मुहुर्मुहुस्तदस्थि जिघत्सति लभते च दष्ट्रावण तद्वत् लोक स्वीयमेव सुख विषयजन्यमिति भ्रात्या विषयाननुधावति विषयतृष्णा यदा वर्धते तदा स्वीयमपि सुख तिरोभवति लब्धे च विषये तृष्णा विलीयते विषयातरतृष्णा प्रादुर्भावावधि आत्मसुखमेवाभिव्यज्यते एवमवाहर्निश बभ्रमीति लोको विषयतृष्णाकर्षित । विषयसपादन पूर्वक सुखानुभवन पामासपाद्यक-डूयनेन तप्तवारिसेचनेन च सिसपादयिषित सुखानुभवमनुकुरुते । विशेषतोऽभिव्यज्यमानमपि पामाकडूयनतप्तोदसेचनसुख नाभिलष्यति जन तदनतसभाव्यमानदु खानुसधानसलग्नमनस्तया । तथैव विषयलब्धि-समनतरभावि सुख पूर्वतनदु खेन भाविदु खेन च ग्रस्यमानमिति नाभिलष्यति प्रेक्षावान् ॥

सच्चिदानदरूप ब्रह्मैव जीव अत एव सुप्तौ स्वमपीतो भवति तस्मादेन स्वपितीत्याचक्षते इत्येकत्राचष्टे । अन्यत्र च अहरहर्ब्रह्मगच्छत्य एतं ब्रह्मलोक न विंदत्य नृतेन हि प्रत्यूढा इति सुप्तौ ब्रह्मलोकगमन-माचक्षाणा श्रुति. जीवब्रह्मणोरभेद स्फुटयति । ब्रह्मलोकशब्दस्य ब्रह्मैव लोक इत्यर्थ एव चिकीर्षित । बहुतप साध्यो ब्रह्मणोलोक सर्वप्र-जाभि प्रत्यह कथं प्राप्येत ॥

नच वाच्य जीव अल्पज्ञो दु खी सर्वज्ञ नित्यतृप्त ब्रह्म कथ भवेदिति—यत चैतन्यमेकमेव मायोपधिवशान् सर्वज्ञ चित्तोपाधिवशात् अल्पज्ञमिव भाति यथा एक एव पुमान् सुवसन सद प्रवेष्टुमर्हति स एव चीरचेलो गृहाभ्यतर एववसति । यथावा अच्छभाजनस्थमभ. पानीय

भवति तदेवमलिनामत्रस्थ पादशौचादौ विनियुज्यते। यथावा औष्ण्य-प्रकाशात्मा वन्हि इधनभेदैर्भिद्यमान इव भासमानोऽपि एक एव यथावा काचनघटीमृत्कुभयोरबर एकमपि उपाधिभेदान् भिद्यत इव भाति उपधेयाभेदेऽपि उपाध्यो काचनमृद्धटयोर्मूल्यभेदवत् चैतन्यस्यै-क्येऽपि मायामनोरूपोपाध्योरुत्कर्षनिकर्षौ न निवारयितु शक्यौ। उपा-ध्यनुरोधे एकस्यापि चैतन्यस्योत्कर्षनिकर्षौ भवत इव। उपाध्यनुरोधाभावे उत्कर्षनिकर्षौ न भात एव। अत्रार्थे "ब्रह्मवेद ब्रह्मैव भवति—

यदा सर्वे प्रमुच्यते कामा येऽस्य हृदि श्रिता॰ ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥

इत्यादिश्रुतय पर सहस्रा प्रमाण। उपाधिमनुरुध्यप्रवहति व्यवहारकाले ईश्वरस्य सेव्यत्व जीवस्य सेवकत्व वैकुठकैलासदीना व्यावहारिक सत्यत्व अद्वैतिनोऽप्यभ्युपगच्छत्येव। इतोऽप्यधिक पारमार्थिकसत्य वस्तु एक-मगीकुर्वते ॥

तावता सगुणाना हरिहरादिमूर्तीना पूज्यता प्रतिपादयद्भिर्ग्रंथात-रैर्न कश्चिद्विरोधः। एव च दुर्लभ मानवजन्म लब्ध्वा कथचित् सुखस्वरूपं ब्रह्मैवाहमिति साक्षात्कृत्य—

आत्मान चेद्विजातीयादयमस्मीति पूरुष॰ ।
किमिच्छन् कस्य कामाय शरीरमनुसज्वरेत् ॥
आत्मन्येव च सतुष्टस्तस्य कार्यं न विद्यते ।
इति श्रुतिस्मृत्यनुसारेण कृतकृत्यो भवेदिति ॥

**शिवम्**

स्यादेतदेव यद्यर्थाकारा बुद्धि स्यात् निराकारा तु नो बुद्धि आकारवान् बाह्योऽर्थः ॥

अत्र प्रतिविधीयते-- स्यादेतदेवमिति ॥ अयमाशय — यदुक्तमेकमेव ज्ञान ग्राह्य ग्राहक चेति, तत्किं क्रियाकर्मत्वाभिप्राय उत करणकर्मत्वाभिप्राय अथ वा कर्तृकर्मत्वाभिप्रायम् । नाद्य न हि पाकः पच्यते छिदा वा छिद्यते । न द्वितीयतृतीयौ, न ह्यङ्गुल्यग्रेणैवाङ्गुल्यग्र स्पृश्यते, नाप्यङ्गुल्यग्रमात्मान स्पृशति । आसा विधाना दृष्टान्ते क्वचिदप्यदर्शनात् ज्ञानेऽपि नास्ति सभव इति ॥

अथ ज्ञान स्वयमेव प्रकाशते, नान्यमपेक्षते, तदेतत्स्वयप्रकाशत्वमेव ग्राह्यमेव ग्राहकमिति प्रकारान्तरणोच्यते न पुन कर्मत्वमिति चेत्, तर्हि ज्ञान कस्य प्रकाशते, न तावदन्य पुमानस्ति, तत्र स्वयमेव स्वस्मै प्रकाशमान अह नीलमिति प्रत्यगात्मवृत्ति स्यात्, इद नीलमिति तु पराग्वृत्ति ज्ञानमुत्पद्यते । अतो नैकस्य ग्राह्यता ग्राहकता चेति ॥

यद्यपि दीपधीशब्दा त्रय स्वप्रकाशका इति जगत्यास्ति प्रवाद । स चाविचारितरमणीयः—दीपो हि चक्षुषा गृह्यते ग्राहयत्यर्थम् । शब्दोऽपि समयग्रहणपूर्वकमर्थ प्रकाशयति स्वय श्रोत्रेण गृह्यते । एव ज्ञानमपि विषय प्रकाशयति स्वयमनुमीयते इत्युच्यते । दीपस्य दीपान्तरानपेक्षामात्रेण स्वयप्रकाशप्रवाद । शब्दस्य तु शाब्दबोधे शब्दोऽपि भासते इति वैयाकरणाभिमानमूल । ज्ञानस्यापि साधकसिद्धिं विना साध्यासिद्धिर्नेति स्वप्रकाशवादोऽवृथाऽऽग्रहमूल एव । तस्मात् ज्ञानमेव मुख्य प्रकाशकम् ॥

यस्त्वात्मा ग्राह्यो ग्राहकश्चेत्युच्यते तत्रापि न ज्ञानस्य ज्ञेयाद्म कथचिद्भेदोऽस्ति भवताम् । अस्माक तु स्वरूपेणैकोऽप्यात्मा धर्मरूपेण

**स बहिर्देशसबद्धः—इदमिति प्रतीयते ॥**

कथचिद्भिन्न । तदस्य ज्ञानरूपेण ग्राहकत्व द्रव्यादिरूपेण ग्राह्यत्वमतो नैकत्वम् । यद्वा—ज्ञानविशिष्टो धर्मी ग्राहक द्रव्यत्वादिविशिष्टो ग्राह्य इति भेद ॥

तर्हि कथमहप्रत्ययस्य प्रत्यग्वृत्तित्वम् ? एतदुक्त भवति—अहमिति प्रत्यय आत्मकर्तृक आत्मकर्मकश्चेति । अत्रोच्यते—सर्वमपि ज्ञानमात्मन्येवोत्पद्यते इति आत्मकर्तृकत्वमहप्रत्ययस्यापि सिद्धम् । विषय मन्तरेण प्रत्ययत्वासभवात् आत्मैव विषय इति अगत्याऽभ्युपगन्तव्यम् । प्रत्ययस्य तु नैवावभास । कारण तु—प्रत्ययो हि ज्ञान तच्च करण क्रिया कर्ता वा-भवतु । इद नीलमित्यत्र त्रयाणा अन्यतममपि नोल्लिख्यते । ग्राह्यरूपस्य नीलमात्रस्य वेदनात् । नीलमह जानामीति प्रतिभासस्तु अनुव्यवसाय इति नैयायिकमतम् । आनुमानिक इति वैदिकमतम् ॥

अथ ग्राहकादत्यन्ताभिन्नत्वे च ग्राह्यस्य तदनुभववेलाया ग्राहकोऽप्यनुभूयेत । तद्वदेव वा ग्राह्योऽपि नानुभूयेत । न ह्येकस्य युगपत् ग्रहणमग्रहण च सभवतीत्यभिप्रेत्याह—स बहिरिति ॥ अनेन वाक्येन ग्राहकांशतो निष्कृष्टस्य ग्राह्याशस्य नीलपीतादे प्रत्यक्षाविषयत्वमस्तीति निरूपितम् । केचित्तु—अर्थाकारत्वे नीलपीतादेः बहिर्देशसबद्धत्व हेतुरुच्यते बहिर्देशसबद्धो ह्याकार कथमान्तरस्य ज्ञानस्य स्यादिति व्याचक्षते । तदयुक्त-बहिर्देश. तत्सबन्धो वा परस्यासिद्ध कथमसौ हेतुरुच्यते इत्याक्षेपापत्तेः । इत्थचाय भाष्यार्थ —स एव हि नीलाद्याकारः बहिर्देशसबद्ध इदमिति ग्राहकाद्विविक्त प्रतीयते न बुद्धिरिति ॥

वैभाषिकास्त्वाहु —सत्य ग्राहकाद्भिन्नमेव ग्राह्य तत्तु ज्ञानमेव

अर्थविषया हि प्रत्यक्षबुद्धिः न बुद्ध्यन्तरविषया। क्षणिका हि सा न बुद्ध्यन्तरसमकालमवस्थास्यत इति ॥

उत्पद्यमानैवासौ ज्ञायते ज्ञापयति चार्थान्तरं प्रदीपवदिति यद्युच्यते। तन्न—न हि अज्ञातेऽर्थे कश्चिद्बुद्धिमुपलभते। ज्ञाते त्वनुमानादवगच्छति। तत्र यौगपद्यमनुपपन्नम् ॥

ननूत्पन्नायामेव बुद्धौ ज्ञातोऽर्थ इत्युच्यते। नानुत्पन्नायाम्।

वाऽतीत, नार्थ इति। तन्मतमपाकरोति—अर्थविषयेति ॥ हि यत प्रतीत्यनुरोधात् अर्थविषय प्रत्यक्ष तत एव न बुद्ध्यन्तरविषयमित्यर्थ.। तत्र हेतु·—क्षणिकेत्यादि ॥ ग्राह्यत्वेनाभिमतस्य ज्ञानस्य ग्राहकत्वाभिमतज्ञानोत्पत्तिसमयेऽवस्थित्यभावेन यौगपद्याविरहात् बुद्ध्योरेव न ग्राह्यग्राहकते इत्यर्थ. ॥

अथ विज्ञानवादी बाह्यार्थवादिन चोदयति—उत्पद्यमानैवेति ॥ जायमानमेव ज्ञान प्रतिबन्धानभ्युपगमात् ज्ञायमानमेव सत् अर्थं गृह्णातीति भवताऽप्यभ्युपगन्तव्यम्। स्वस्य च ग्रहणे सति तस्यैवायमाकारो भवतीत्यर्थाभावसिद्धिरिष्टा सेत्स्यतीति भाव·। सत्य नास्ति प्रतिबन्ध। तथापि ग्राहकाभावान्न तदा गृह्यते। लिङ्गाभावाच्च ग्राहकाभाव। ज्ञातत्व च लिङ्ग तदा न विद्यत इत्यभिप्रायेण परिहरति—तन्न न हीति ॥ यौगपद्यमिति ॥ ग्राह्यग्राहकयोस्समकाल इत्यर्थः। अथ वा—ये तु वैशेषिकादय बाह्यार्थवादिन "घटमहं जानामि" इत्यनुव्यवसायरूपमेवार्थग्रहण मन्यन्ते तेषामेव पूर्वोक्त चोद्यम्। तन्निराकरणप्रयोजनमिद—ज्ञानस्योत्पत्तिसमये ग्रहणाभ्युपगमे निराकारस्य तदयोगात् ज्ञानमेवाकारवत्स्यादित्यर्थनाश स्यात्। अतोऽर्थाभ्युपगमविरोधी ज्ञानग्रहणाभ्युपगमस्तेषामित्येतदुच्यत इति ॥

नन्विति ॥ अयमाशय—ज्ञानस्योत्पत्तिरुपलब्धिश्चेति द्वय युग-

**अतः पूर्वं बुद्धिरुत्पद्यते । पश्चात् ज्ञातोऽर्थः ॥**

**सत्यं पूर्वं बुद्धिरुत्पद्यते न तु पूर्वं ज्ञायते । भवति हि कदाचिदेतत्, यत् ज्ञातोऽप्यर्थस्सन् अज्ञात इत्युच्यते ॥**

पदिति तावदविवादम् । तत्तु अर्थोपलब्धे प्राक् पश्चाद्युगपद्वेत्येताव- च्चिन्त्यम् । अत्र सिद्धान्ती अर्थसंवित्ते पश्चात् ज्ञानसंवित्तिं ब्रवीति "ज्ञाते त्वनुमानादवगच्छति" इति । तदस्य ज्ञानोत्पत्तिरपि पश्चादेवा- भिमता । न च तद्युक्तम् । अतो ज्ञानोत्पत्तिं तावत् अर्थसंवित्ते प्राग- पकर्षामीति मत्वा ननूत्पन्नायामित्याह । तदपकर्षे च तत्संवित्तिरपि प्रागेव सिद्ध्यति । न हि निराकारोपलब्धिरस्ति । नाप्यर्थज्ञानयोर्वि- वेकेनाकारद्वय दृश्यते । ततो ज्ञानस्यैवायमाकार इति अर्थाभाव- सिद्धिरिति ॥

अत्र सिद्धान्ती अर्थस्यैव पूर्वं संवित्ति न तु बुद्धेरिति साध- यति—सत्यमिति ॥ कथं पूर्वं न ज्ञायत इत्यत्राह—भवति हीति ॥ अयं भाव·—ज्ञातो मया वसन्तेऽस्मिन् देशे कोऽपि पुरुष· सप्रति विस्मृतवानस्मीति पूर्वत्र ग्राह्ये देवदत्ते स्मृतावप्रतिभासमानेऽपि तद्गोचर ज्ञान प्रतिभासते । ग्राहकादभिन्नत्वे च ग्राह्यस्य तत्रापि स्मरणं स्यात् । तदेवमेकस्य ग्रहणान्वयेऽन्यस्य व्यतिरेकात्सिद्ध भिन्नत्व, भिन्नत्वे सिद्धे बुद्धेरुत्पत्तावपि न तदानीं तस्यास्संवित्तिरित्यत्र ग्राह्य- विनिर्मुक्तस्य ग्राहकस्य संवित्तिरेव फलद्वारा प्रमाणम् । यथा— पूर्वोपलब्धिसाधनस्य ज्ञानाकारत्वसिद्धि फलमिति ॥

एतदुक्तं भवति—नीलाकार चेत ज्ञान न तन्निर्मुक्तं स्मर्येत अतो न ज्ञान नीलाकार न च प्राक् शक्य विज्ञातुम्, अतो न पूर्वं ज्ञायत इति । तस्मात् ज्ञानस्योत्पत्तिरुपलब्धिश्च युगपदिति भ्रम. अबाधितानुभवेन बाधितत्वादिति ॥

नचार्थव्यपदेशमन्तरेण बुद्धेरूपोपलम्भनम्। तस्मान्न व्यप देश्या बुद्धिः। अव्यपदेश्य च न प्रत्यक्षम्। तस्मादप्रत्यक्षा बुद्धिः॥

अपिच काममेकरूपत्वे बुद्धेरेवाभाव नार्थस्य प्रत्यक्षस्य सतः। नचैकरूप्यं अनाकारामेव हि बुद्धिमनुमिमीमहे। साकारं चार्थं प्रत्यक्षमेवावगच्छामः। तस्मादर्थालम्बन प्रत्ययः॥

अपि च नियतनिमित्त तन्तुष्वेवोपादीयमानेषु पटप्रत्ययः इतरथा तन्त्वादानेऽपि कदाचित् घटबुद्धिरविकलेन्द्रियस्य

नचार्थेति॥ अय भाव — स्वच्छ हि चिन्मात्र नैसर्गिक ज्ञान-रूप, तत्तु वासनोपप्लवात् आविद्यमाननीलाद्याकार प्रकाशत इति युष्माक दर्शनम्। ततश्च स्वाभाविकनीलाद्याकारविरहात् तादृश-नीलाद्याकारवत्तया औपाधिकाकारवाचकशब्देन न व्यपदेष्टुमर्हा बुद्धि। यस्मादव्यपदेश्य पररूपेण निरूपणीय मृगतोयवत् न प्रत्यक्षं भवितु-मर्हति तस्मात् प्रत्यक्षत्वयोग्यताविरहात् बुद्धि न प्रत्यक्षा किंतूत्पद्यमाना केवल अर्थं प्रकाशयतीति॥

यद्येवमपि केवल लाघवदृष्ट्याऽवश्यमन्यतरदपह्नोतव्य तर्ह्यर्थ-प्रकाशाधीन तेनानुमेय ज्ञानमेव अपह्नोतव्य न तु प्रत्यक्षसिद्धोऽर्थ इत्याह—अपिचकाममिति॥ अयमाशय —केवल लाघवाभिनिवेशे भूत-चैतन्यवाद एव समाश्रीयताम्। तद्वादरहस्य हीदम्— ज्ञान नाम धातुः शक्तिर्वा तत्त्वतो नास्ति। ज्ञानस्योत्पादिका या सामग्री तयैव ज्ञानकार्योपपत्ते. तदुपगमो व्यर्थ इति। तस्मात् बाह्यार्थसद्भावात् प्रत्ययः प्रत्यक्षादिः अर्थालम्बन न स्वांशालम्बन नापि ज्ञाना-न्तरालम्बन इति॥

कार्यकारणभावादिव्यवहारानुरोधेनाप्यर्थसद्भाव साधयति—अपि-चनियतेति॥ बाह्यार्थवादिना कार्यकारणभावस्य पारमार्थिकस्य सत्त्वात्

स्यात् । नचैवमस्ति, अतो न निरालम्बनः प्रत्ययः । अतो न व्यभिचरति प्रत्यक्षम् ।

तन्तुषूपादीयमानेषु तज्जन्यस्य पटस्य प्रत्यय नियतनिमित्त' स्वविषयस्य पटस्य नियतपूर्ववृत्तित्वेनोपादयिमानाना तन्तूना ज्ञानेन व्यवस्थितनिमित्तनैमित्तिकभाव उपपद्यते । विज्ञानमात्रवादिना तु एतादृशनिमित्तनैमित्तिकभावासिद्ध्या कदाचित् तन्तुज्ञाने घटज्ञानमपि स्यात् । तच्चानिष्टमिति । अत्र यद्यपि बाह्यार्थवादिनामपि स्वशक्तिवशादेव तन्तव पटमारभन्ते मृत्पिण्डो वा घटम् । एव ज्ञानवादिनामपि तन्तुज्ञानानि पटज्ञानम्, न घटज्ञानमिति सिध्यत्येव व्यवस्था । यदाहु —

यथाविध घट दृष्ट्वा द्वैतवादी विचेष्टते ।
ज्ञात्वा तथाविध ज्ञान अद्वैती किं न चेष्टते ॥ इति ॥

तथापि—अर्थवादिमते शक्तिमदपि हि तन्त्वादि कारण न सर्वदा कार्यमारभते । कि तु शक्त्यभिव्यञ्जक सहकारिणमपेक्षते । तच्च सहकारिसमवधान देशकालतन्तुवायादिनिमित्तकम् । अस्ति च शक्तिरपि भावाना विलक्षणा पारमार्थिकी । ज्ञानमात्रवादिमते तु असत्पर्यायसंवृतिसत्यमेव सर्वमिति व्यवस्था न सिध्यति । किंच—असत्यपि मृत्सलिलच्छन्नबीजज्ञाने अङ्कुरज्ञान दृश्यते । अता न कारणज्ञान न कार्यज्ञानस्य जनकमिति शक्यते वक्तुम् । अत प्रत्यक्षस्य बहि प्रवृत्तिसामर्थ्यसंभवात् न तत्परीक्षया बाह्याभावासिद्धि' । प्रत्यक्षविरुद्धत्वाच्च नानुमानेनापि बाह्याभावसिद्धिरिति भाव । प्रत्यक्षसूत्रार्थमुपसंहरति—अतो न व्यभिचरतीति ॥ एवलक्षणकत्वात्प्रत्यक्षस्य न युक्ता निमित्तपरीक्षेति । इत्थमर्थालम्बनत्वे प्रसाधिते विचारशास्त्र सर्वमपि निराकुल भवतीति भाव. ॥

### प्राकट्यम्

अथात्रात्यावश्यकं ज्ञाततालक्षणप्राकट्यरहस्यं विशदीक्रियते—तत्र केचिदाहुः—सर्वथा तावदस्ति ज्ञानम्। तथाहि—विद्यमान एव हि घटः कस्यचिदेव व्यवहारयोग्यतामापद्यते न सर्वेषां नापि सर्वदा। तदवश्यं यो यदा तेन व्यवहरति तस्य तद्व्यवहारानुगुणः कश्चिदतिशयस्सजात इति कल्पनीयम्। स ज्ञानमिति। तच्च प्रागपि व्यवहारात् अवगम्यते। अव्यवहरन्नपि ज्ञातोऽयमर्थो मयेति आत्मनाऽर्थस्य ज्ञातत्वमनुसधत्ते इति सर्वजनीनमेतत्। न च ज्ञानमविदुषा ज्ञातत्वरूपत्वं शक्यं वेदितुम्, यदेव प्रागेव व्यवहारादुपजायमानं ज्ञातत्वावगमः असति ज्ञानस्य प्रत्यक्षत्वे कथमुपपद्यते इति॥

अत्राहुः—ज्ञानजन्योऽर्थगतः कश्चिदतिशयः प्रकाशनभासनादिपर्यायपदवाच्यः। स च पाकजन्यौदनादिगतातिशयवत् अनवगतेऽपि ज्ञाने शक्यतेऽवगन्तुम्। स एव ज्ञानस्य कल्पक इति॥

अथ स्यात् स च प्रत्यक्षेऽर्थे प्रत्यक्षावगतः कल्पयेदपि ज्ञानम्। अनुमानादिषु तु तस्याप्रत्यक्षत्वात् प्राग्व्यवहाराचद्व्याप्तलिङ्गाभावात् अप्रमितस्य चाकल्पकत्वात् न ज्ञानं कल्पयेत्। अनुमितेऽपि चार्थे ज्ञातो मयाऽग्निरिति अग्निं ज्ञातमनुसधत्ते। अतः सम्यग्वक्तव्यं ज्ञानं प्रमाणमिति चेत्—उच्यते ज्ञानक्रियाजनितः ज्ञातुः ज्ञेयेन सह आप्तत्वसंबन्धोऽस्ति। स मानसप्रत्यक्षावगतः ज्ञानं कल्पयति सत्यां जिज्ञासायाम्। यत्रापि च कश्चिदर्थमनुभूय तद्विषयं ज्ञानमकल्पयित्वैव कालान्तरे तमर्थं स्मरति तत्रापि स्मृतिज्ञानेनैव आत्मनोऽर्थस्य च द्रष्टृदृश्यत्वसबन्धे निष्पन्ने मानसप्रत्यक्षेणावगते तद्बलेन च ज्ञाने कल्पिते तस्य इन्द्रियादिप्रत्युत्पन्नकारणासंभवेन स्मृतित्वं निश्चित्य तदनुपपत्त्या पूर्वमनुभवः कल्प्यते। स एवमात्मनोऽर्थेन सबन्धः अधिगतिः प्राप्तिः दृष्टत्वं ज्ञातत्वादिपदैरभिधीयते इति॥

येऽपि च स्वप्रकाशा संविद मन्यन्ते त्रिपुटीज्ञानवादिनः प्राभाकरादयः, तेषामपि स्वोत्पत्तिसमये संवित्ति –स्वात्मान कर्तार वेद्य च भासयति, न तु स्वस्या वेत्तुर्वा संवेद्यसबन्ध, तस्य तदानीमनिष्पन्नत्वेन असत्त्वात्, ततो निष्पन्नाया संवित्तौ तस्या कर्तुश्च तद्द्वारा विषयसबन्धे जाते ततो मानसेनैव प्रत्यक्षेण अर्थेन सह संवित्ते· संवेत्तुश्च सबन्धोऽवभासत इत्यङ्गीकर्तव्यम्। संविदन्तरोत्पत्तिसमये च पूर्वसंविदो नष्टत्वात् न तद्धर्मत्वेन संवेद्यसबन्ध शक्यते प्रत्यक्षेण ग्रहीतुमिति संवेत्तृधर्मभूत एव संवेद्यसबन्ध कोऽपि नाम सर्वजनीन प्राप्तिपर्यायो गृह्यत इति तत एव संवित्तिरूपक्रियाकल्पनासिद्धेरल स्वप्रकाशतया। तत्सिद्ध "नह्यज्ञातेऽर्थे कश्चिद्बुद्धिमुपलभते। ज्ञाते त्वनुमानादवगच्छति" इति॥

इद पुनरिहावधेय–इमामेव च प्राप्तिं अधिगतिरिति न्यायबिन्दुटीकाकार धर्मोत्तराचार्य व्यपदिशति। तदभिप्रायेणैव अनधिगतार्थगन्तृ प्रमाणमिति लक्षण प्रवृत्तम्। इद रहस्यमनवगतवन्तोऽधुनातनाः अनधिगतत्व विचित्रतर परिष्कुर्वन्तोऽद्यापि क्लिश्यन्त इति॥

एव द्विविधे बाह्यापलापे प्रमाणमूलक· एतावता प्रबन्धेन निराकृत·। प्रमेयमूलकोऽपि किंचिदुपन्यस्य निराक्रियते। यथा—न तावदणूना ग्राह्यत्वम्। तेषामतीन्द्रियत्वात् क्षणिकाना च तेषा समुदायभावासभवात् परमाणुसयोगस्य व्याप्यवृत्तित्वाव्याप्यवृत्तित्वविकल्पदुःस्थत्वेन अवयवेष्ववयविन कृत्स्नैकदेशविकल्पदुःस्थत्वेन च परस्परसंयुक्तावयवतदाश्रितावयव्यभावाच्च। नाप्यवयविजात्यादीना ग्राह्यत्वम्। व्यतिरेकाव्यतिरेकविकल्पाक्षमाणा गगनकुसुमायमानत्वात्। अतो बाह्य नास्तीति॥

तन्न युक्तम्—यदाऽऽन्तरस्य ज्ञानाकारस्य न कथंचित् ग्राह्यत्वं तदा बाह्यस्यैव ग्राह्यत्व बलादभ्युपगन्तव्यम्। ततश्चाणूनां त्वदुक्तेनैव

### अनुमानम्

**अनुमानं ज्ञातसम्बन्धस्यैकदेशदर्शनात् एकदेशान्तरे असन्निकृष्टेऽर्थे बुद्धिः । तत्तु द्विविधम्—प्रत्यक्षतोदृष्टसम्बन्धं सामान्यतोदृष्टसंबन्धं च । प्रत्यक्षतो दृष्टसम्बन्धं यथा— धूमाकृतिदर्शनादग्न्याकृतिविज्ञानम् । सामान्यतोदृष्टसम्बन्धं यथा—देवदत्तस्य गतिपूर्विकां देशान्तरप्राप्तिमुपलभ्य आदित्यस्य गतिस्मरणम् ॥**

मार्गेण ग्राह्यत्वासंभवात् समूहाख्यस्यावयविनः तत्समवेतानां च जात्यादीनां परमार्थतया साधयिष्यमाणानां ग्राह्यत्वमङ्गीकर्तव्यमिति ॥

निमित्तसूत्रे प्रमाणानां प्रसिद्धत्वेनापरीक्ष्यत्वे वर्णिते व्यभिचारात्परीक्षितव्यं शुक्तिरजतवेदने प्रत्यक्षस्य व्यभिचारात् तत्पूर्वकत्वाच्चेतरेषामपि व्यभिचार इति चोदिते प्रत्यक्षस्यैवपर्यन्तेन ग्रन्थेन अव्यभिचारितत्वेनापरीक्ष्यत्वमुक्तं, ततश्च तत्पूर्वकत्वेन यदनुमानादीनां व्यभिचारित्वमुक्तं तत्परिहृतम् । इदानीमात्मीयलक्षणेन अव्यभिचारादनुमानादिकं न परीक्ष्यमित्युच्यते । तत्र तावदनुमानं लक्षयति—अनुमानमिति॥ ज्ञातसंबन्धेति कर्मधारयसमासः । सम्बन्धश्च नियमाख्यः व्याप्तिपर्यायः । एकदेशशब्दाभ्यां च सम्बन्धिनोरभिधानम् । सम्बन्धो हि संबन्धिनोः व्यासज्यवर्तमानः एकदेशी । एकदेशौ च सम्बन्धिनौ ज्ञातसम्बन्धस्यैकदेशः धूमादि । तस्य दर्शनात् एकदेशान्तरे वह्न्यादौ बुद्धिः अनुमानं प्रमाणमित्यर्थः । फलस्य प्रामाण्यदृष्ट्यैतस्य व्यवहारः । व्याप्तिपक्षधर्मताज्ञानजन्यं अबाधितार्थविषयकं ज्ञानमनुमानमिति फलितार्थः ॥

एषा व्याप्तिः यस्य धूमादेः अनवरतोर्ध्ववृत्तेः येनाग्न्यादिना आर्द्रेन्धनसंयोगविशिष्टेन यावद्देशकालवर्तिना पूर्वदृष्टमहानसादौ निरूपिता स तादृशो व्याप्यांशः साध्यधर्मिणि पर्वतादौ दृष्टः तस्य व्यापकांशस्य तावद्देशकालवर्तिनोऽनुमापकः । एवं च पूर्वदृष्टमहानसादिसपक्ष-

गतैव व्याप्तिरनुमानाङ्गम् । न तु सकलदेशव्याप्तिरिति सिद्धम् । ततश्च लिङ्गसकलदेशकालव्याप्त्यवगमः लिङ्गिनोऽनुमानाङ्गमिति मन्वाना तस्य च प्रमाणान्तर मृगयमाणा. सकृदेव प्रत्यक्षेण नियमो गृह्यते, भूयोदर्शनाहितसंस्कारसचिवेन वा चरमेण प्रत्यक्षेणेत्यादिसंविद्विरुद्धाभिधानेन क्लिश्यमाना निरस्ता ॥

व्याप्तिग्रहक्रमस्तु—बहुभिर्दर्शनै बहुषु देशेषु धूमस्याग्निना साहित्य गम्यते । तस्मिंश्चावगते व्यभिचारे चानवगते महानसादिषु कतिपयेषु धूमस्याग्निव्याप्ति अवगता भवति, तावदेवानुमानाङ्गम् । तदनन्तर तु यत्र धूमन्तत्राग्निरिति योऽवगम सोऽप्यानुमानिक एव, परोक्षरूपत्वात्, तस्य तु प्रत्यक्षत्वमनुभवविरुद्धम् । तत्र कचित्सामान्यतो व्याप्तिर्गृह्यते, यथा अग्निधूमयो । कचिद्विशेषयो । यथा—कृत्तिकारोहिण्योरिति ॥

अत्र सबन्ध इति निर्देशेन कार्यकारणतादात्म्यसंयोगसमवायैकार्थसमवायविरोधादि न व्याप्ति नापि येनकेनापि सबन्धेन साहचर्य, किन्तु प्रागुक्तसबन्धान्यतमसबन्धाधीन नियमाख्य कश्चिदतिरिक्त सबन्धः व्याप्तिरिति सूचितम् ॥

असंनिकृष्टेऽर्थे इति ॥ अत्रार्थ नाग्न्यादिरूप सबन्धग्रहणकाल एव सिद्धत्वात्, नापि पर्वतादि प्रत्यक्षगृहीतत्वात्, किंतु एकदेशविशिष्टो धर्मी वह्निमत्पर्वतादिरित्यवगन्तव्य । नैयायिकास्तु प्राचीना धूममेव पक्षीकृत्य तस्यैवाग्निविशिष्टस्यानुमेयतामाहु । स चार्थ येन रूपेणानुमातुमिष्यते तेनैव रूपेण तद्विपरीतेन वा रूपान्तरेण शीघ्रप्रमाणेन परिच्छिन्न संनिकृष्ट, तस्य अनुमेयत्व व्यावर्तयितु असंनिकृष्ट ग्रहणम् । ज्ञातसबन्धपदेन दृष्टान्तदोषा दर्शनपदेन हेतुदोषा असंनिकृष्टपदेन च प्रतिज्ञादोषा व्यावर्तिता ॥

इदमत्रावधेयम्—व्याप्तिः द्विविधा अन्वयव्याप्ति व्यतिरेकव्याप्तिश्चेति। तत्रोभयमप्यनुमानाङ्गं नियतमिति केचिदाचक्षते। अन्वयव्याप्तिरेवानुमानाङ्गम्। व्यतिरेकव्याप्तिस्तु न नियतमिति सिद्धान्तः। शाक्यास्तु विपरीतमेतदाहुः—तथाहि-यद्यन्वयोऽङ्गमिष्येत ततोऽवश्य अतीतानागतानामपि धूमाना अग्निभिस्सर्वैस्सह समन्वय ग्रहीतव्य। नचासावीश्वरेणापि ग्रहीतुं शक्यते। नच केषाचिदन्वये गृहीते अन्यैरगृहीतान्वयै अनुमान सभवति। वह्निमत्त्वसामान्येन धूमवत्त्वसामान्यस्यान्वयो गृहीत इति चेत्, न—सामान्यस्य स्वलक्षणव्यतिरेकाव्यतिरेकविकल्पसहनासभवात्। अस्तु वा सामान्य, तथापि नदीयाशेषदेशकाला न्वयोऽग्ने दुर्ग्रह एव। विपक्षव्यतिरेकस्तु सुज्ञान स ह्यदर्शनमात्रगम्य। सुकर च सर्वधूमानामपि एकदेशस्थेनैव अनग्निष्वदर्शनम्। तस्मादनग्निभ्यो व्यतिरिच्यमानो धूम अनग्निव्यावृत्तिमुखेन अग्निं गमयति, अतएवातद्व्यावृत्तिविषयत्व लिङ्गशब्दयो। तस्मात् व्यतिरेक एवानुमानाङ्गमिति॥

तत्रोच्यते—नान्वयस्यानङ्गत्व परैरपि वक्तु शक्यम्। यत — विपक्षवत् सपक्षेपि अदृष्ट चेल्लिङ्ग सर्वतो व्यावृत्त कुत्र किं गमयेत्। किंच यदि ह्यनग्नाविव साग्नावपि धूमो न दृश्येत, ततोऽनग्नेस्साग्नेश्च द्वाभ्या व्यावृत्तो धूम तयोर्व्यावृत्तिं गमयन् गन्धवत्त्वमिव सशयहेतुस्स्यात्। अतोऽन्वयोऽप्यङ्गमेव। यत्तु सर्वत्रान्वयो दुर्ग्रह इत्युक्त तुल्यमिद व्यतिरेकेऽपि। न ह्यदर्शनमात्रात्सोपि सिध्यति। दृश्यादर्शनगम्यत्वात्। एकदेशस्थस्य च सर्वत्र दृश्यादर्शनासभवात्। तस्मादनवगतेऽपि सर्वत्रान्वये सर्वतश्च व्यतिरेके बहुशस्साहित्यावगममात्रादेव व्यभिचारादर्शनेन सनाथात् अनुमानोत्पत्तिरङ्गीकर्तव्येति॥

निरुक्तलक्षणलक्षितमनुमान विभजते—तत्तु द्विविधमिति॥ प्रत्य-

## शब्दः

शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानम् ।

शब्दप्रमाणं लक्षयति — शास्त्रमिति ॥ यद्यपि प्रमाणावान्तरभेदेषूच्यमानेषु तद्भेदस्य शब्दस्य लक्षणं वक्तव्यं, न शास्त्रस्य । यद्यवश्यं तदपि वक्तव्यम्, तर्हि शब्दस्योक्त्वा पश्चाद्वक्तव्यम् तथापि वेदं व्याख्यातुकामः तदुपयोग्येव शब्दविशेषस्य लक्षणं कथितवान् न सामान्यस्य, सामान्यलक्षणं तु, असन्निकृष्टार्थविज्ञानजनकशब्दत्वमर्थाल्लभ्यत इति ॥

तर्हि वेदव्याख्याने प्रत्यक्षादिलक्षणकथनस्य किं फलमिति चेत् शास्त्रार्थावधारणाय वर्णमात्रादिरूपेण यथावच्छास्त्रस्वरूपावधारणं प्रत्यक्षलक्षणफलम् । अनुमानादेरपि लक्षणं प्रत्येकगृहीतमन्त्रविनियोगस्य विश्वजिदादिफलस्य अङ्गेयत्तादेश्चावधारणे उपयुज्यत इति तत्कथनं सगतम् ॥

निरुक्तशास्त्रलक्षणेऽपि शब्दशब्दः चोदनापरः । असन्निकृष्टार्थशब्दः धर्माधर्मपरः । तथा च चोदनाज्ञानजनितधर्माधर्मादिविज्ञानं शास्त्रमिति ज्ञानप्रामाण्याभिप्रायेण शास्त्रलक्षणं सिद्धम् । वृत्तिग्रन्थे "प्रत्यक्षादीनि प्रसिद्धानि प्रमाणानि । तदन्तर्गतं च शास्त्रम्" इति शास्त्रस्यैवापरीक्ष्यत्वं प्रतिज्ञातं, तदनुरोधेन शास्त्रस्यैवाव्यभिचारित्वं युक्तं वक्तुमित्यवगन्तव्यम् ॥

तदिदं शास्त्रमनुमानान्तर्भूतमिति शाक्या वैशेषिकाश्च प्रतिपन्नाः । इदं शाक्यानां वचनम्—

प्रत्यक्षमनुमानं च प्रमाणे सदृशात्मनः ।<br>
अप्रत्यक्षस्य संबन्धात् अन्यतः प्रतिपत्तितः ॥ इति ॥

इद हि प्रमाणद्वय नेन्द्रियार्थसन्निकृष्टस्य वस्तुन ग्राहकम्, न वा व्यापकत्वेन गृहीतस्य वस्तुन । किंतु तत्सदृशस्यैव । कुत इति चेत् वस्तूना क्षणिकत्वेन पूर्वक्षणवर्तिवस्तुन सन्निकर्षात् उत्तरक्षणवर्तिनो वस्तुनः ग्रहणात् । तदाह—अप्रत्यक्षस्य सबन्धादिति । तथा अन्यत प्रतिपत्तित व्याप्यत्वेन गृहीतादन्यस्यैव वस्तुन धूमस्य ज्ञानाद्-नुमित्युदयादित्यर्थ ॥

इद तु वैशेषिक सूत्रम्—"अस्येद कार्यं कारण सबन्धि एकार्थ-समवायि विरोधि चेति लैङ्गिकम् । एतेन शाब्द व्याख्यातम्" इति । अनुमाने शब्दास्यान्तर्भाव इति फलितार्थ । तदुभयमतनिराकरणाय लक्षण कथितम् ॥

अतिरिक्तत्वसाधकयुक्तिस्त्वित्थम्—बुद्धिविशेषोऽर्थविशेषश्च अ-पूर्वकाव्यादिवाक्योच्चारणेऽवगम्यते, न च विशेषस्यानुमानतस्सिद्धि, वाक्यमात्रेण हि बुद्धिमात्रमनुमीयेत, ततश्चार्थमात्रम् । अर्थविशेषप्रति-पादकवाक्यरचनया तदर्थविषयकबुध्यनुमान तु अर्थविशेषज्ञानमन्तरेण-न सभवतीति तादृश ज्ञान वाक्याधीनमित्यवगन्तव्यम् ॥

अपिच स्वाभाविके हि शब्दस्यार्थप्रत्यायनसामर्थ्येऽवगते ततश्चार्थ-प्रतीतौ जाताया तद्वशेन पश्चादुपजायमानो व्याप्तिग्रह कथमर्थप्रतीतेरङ्ग-भवति । यस्य हि व्याप्तिनिबन्धनैव प्रत्यायनशक्ति तदेव लिङ्गम् । शब्दस्तु व्याप्तिग्रहानपेक्ष स्वरसादेव शक्त लिङ्गविलक्षणत्वान्नानु-मानाय कल्पते इति ॥

———

## उपमानम्

**उपमानमपि सादृश्यं असन्निकृष्टेऽर्थे बुद्धिमुत्पादयति । यथा गवयदर्शनं गोस्मरणस्य ॥**

"प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानम्" इति अक्षपादेनोपमानलक्षणं सूत्रितम् । तच्च सूत्रं केचिदेव व्याचक्षते—कीदृशो गवय इति नागरकेण पृष्टो वन्यः प्रसिद्धेन गवा साधर्म्यात् अप्रसिद्धं गवयं येन वाक्येन गौरिव गवय इत्यात्मकेन बोधयति तद्वाक्यमुपमानमिति । अस्य च वाक्यस्य गवयशब्दशक्तिरूपोपायबोधनतात्पर्यात् गवयरूपोपेयता-त्पर्यविरहात् न शब्दप्रमाणतेति ॥

अन्ये तु यथा गौस्तथा गवय इत्यतिदेशवाक्यं श्रुत्वा वनं गतस्य यत् गोसदृशो गवय इति ज्ञानं तदुपमानमिति व्याचक्षते । स चातिदेशवाक्यार्थनिश्चयरूपः ॥

परे तु—गोसदृशगवयदर्शनेन यत् गोसदृशस्य गवयशब्दसंज्ञेति समाख्यासंबन्धज्ञानं तदुपमानमिति व्याचख्युः ॥

तत्र प्रथमे पक्षे शब्दान्न विशेषः । द्वितीये धर्मांशे स्मृतिः धर्म्यंशे प्रत्यक्षमेव । तृतीये तु वाक्यजमेव तादृशं ज्ञानमिति विलक्षणं लक्षण-माह—उपमानमपीति ॥ अयमर्थः—सादृश्यं स्मर्यमाणमिति शेषः । सादृश्यविशिष्टगवयदर्शनमिति यावत् । असन्निकृष्टे गृहवर्तिनि गवि या बुद्धिं अनेन सदृशो मदीयो गौरित्याकारिका उत्पादयति सा बुद्धि-रुपमानमित्यर्थः । तत्प्रमेयं गोगतं सादृश्यं गवयगतसादृश्यादन्यदेवेति ध्येयम् । गोस्मरणस्येति ॥ जनकमिति शेषः ॥

केचित्तु—गोस्मरणस्येति पुरुषपरं व्याचक्षते । तदा नन्द्यादिषु स्मरते पाठो मृगयितव्यः । परे—व्यधिकरणबहुव्रीहिमिच्छन्ति । अन्ये तु कर्मणि स्मरणशब्दं व्युत्पाद्य उत्तरनिपातं मन्यन्ते ॥

## अर्थापत्ति

अर्थापत्तिरपि दृष्टः श्रुतो वाऽर्थः अन्यथा नोपपद्यत इत्यर्थकल्पना। यथा जीवति देवदत्ते गृहाभावदर्शनेन बहिर्भावस्यादृष्टस्य कल्पना ॥

सादृश्य नाम वस्त्वन्तरस्य स्वावयवेषु गुणेषु कर्मसु वा समवेतै यैस्सामान्यै येन प्रकारेण योग तेनैव प्रकारेण वस्त्वन्तरस्य योग.। नत्ववस्तु, नापि तत्त्वान्तरम्। तादृशसामान्याल्पत्वभूयस्त्ववशेने सादृश्यस्याप्यल्पत्व भूयस्त्व च विज्ञायते। यत्र गुणयोस्सादृश्य यथा केतकीगन्धसर्पगन्धयो तत्र अवयविगुणानामवयवगुणसामान्ययोग। कर्मणामपि स्वसबन्धिद्रव्यदेवतासामान्ययोग। यत्र त्ववयवयोस्सादृश्य, अक्षिपद्मदळयो, तत्रापि स्वावयवसामान्ययोग इत्यवगन्तव्यम्। सामान्यमेव सादृश्यमिति साख्या॰ अवयवसामान्ययोग इति वैदिका। भूयोधर्म इति तार्किका ॥

दृष्टइति ॥ प्रत्यक्षादिभि पञ्चभि प्रमाणैरुपलब्द.। श्रुत इति ॥ कुतश्चन लौकिकाद्वैदिकाद्वा शब्दादवगतोऽर्थ। अन्यथा नोपपद्यत इति ॥ अन्यथाऽनुपपद्यमानात् तस्मात् अर्थकल्पना अदृष्टाश्रुतार्थज्ञान अर्थापत्तिरित्यर्थ ॥

एवमसौ षड्विधप्रमाणप्रभवत्वेन षड्विधा भवति। तत्र दृष्टवचनेनोपलब्धिवाचिना गतार्थत्वेऽपि श्रुतार्थापत्ते पृथकरण प्रमाणग्राहिणीत्वेन। "रात्रौ भुङ्क्ते" इत्यादिवाक्य हि शब्दप्रमाण भवति। इतरास्तु प्रमेयग्राहिण्य। अर्थापत्तिसिद्धस्यार्थस्यापूर्वादे॰ चोदनालक्षणत्वासिद्धये शब्दस्यैव कल्पना नार्थस्येति हृदयम् ॥

तत्र प्रत्यक्षपूर्विका तावदियमर्थापत्ति —प्रत्यक्षावगतदहनससर्गोद्भूतदाहाख्यकार्यान्यथानुपपत्त्या वह्नेर्दाहशक्तिकल्पना। भाष्येत्वभावपूर्विकाया अर्थापत्तेरुदाहरण प्रदर्शनार्थम् ॥

अभाव

**अभावोऽपि प्रमाणाभाव नास्तीत्यस्यार्थस्यासन्निकृष्टस्य। तस्मात्प्रसिद्धत्वान्न परीक्षितव्यं निमित्तम् ॥**

प्रमाणाभाव प्रत्यक्षादिप्रमाणपञ्चकानुत्पत्तिः । सदुपलम्भक-प्रमाणसामान्याभाव अनुपलब्धिरिति यावत् । असन्निकृष्टस्य अनधिगताबाधितस्य नास्तीत्यस्यार्थस्य घटो नास्तीत्याद्यर्थस्य या बुद्धिमुत्पादयति सा बुद्धि अभावोपलब्धि अभावो नाम प्रमाणमित्यर्थ ॥

नन्वभाव इन्द्रियेणैव गृह्यते रूपादिवत्, उन्मीलिताक्ष एव घटो नास्तीति बुध्यते । न निर्मीलिताक्ष । अन्धो वा । तथाचापरोक्षावभास विशिष्टप्रतीतिश्चोपपद्यते । इतरथा भूतलमात्रविषयत्वादिन्द्रियस्य अनुपलब्धेश्चाभावमात्रविषयत्वात् निर्निबन्धनो विशिष्टबोधस्स्यात् इति चेन्न–दृश्यादर्शनमभावे प्रमाण नादर्शनमात्रम् । येन चाश्रयभूत भूतलादिक वस्तु गृहीत तस्यैव घटो दृश्यो भवति । नान्यस्य । उन्मीलिताक्षस्यैव च तद्ग्रहणमिति तत्सिद्धयेऽक्षापेक्षा नाभावग्रहणाय । गृहीते चाश्रये प्रतियोगिनि च स्मृते अक्षस्थानीयेन दृश्यादर्शनसहायेन मनसैवाभावग्रहणोपपत्ते नेन्द्रियस्याभावे शक्ति शक्या कल्पयितुम् । विशिष्टबोधोऽपि कारणसमाहारादेवोपपद्यते । यथा क्षीरादिद्रव्ये जिह्वागते द्रव्यस्वरूप त्वचा माधुर्यं अस्य द्रव्यसबन्धश्च रसनेनेत्युभाभ्या माधुर्यविशिष्टक्षीरबुद्धिस्तथेति ॥

अपिच—यदा हि कश्चित्प्रात काले कंचिद्देशमध्यासीनः तत्र गजतुरगादिकमदृष्ट्वा तदस्मरणाच्च तदभावमप्यगृहीत्वा देशमात्र दृष्ट्वा देशान्तर गत मध्यन्दिने पृच्छ्यते—कश्चित् तस्मिन्देशे प्रातःकाले गजस्तुरगः पार्थिवो वा समागत इति । स तदा त देशमवगतत्वात् स्मरन्नपि तत्र देशेऽन्येषा गजादीनामभाव प्रागगृहीत तदैव गृह्णाति ।

नच मध्यन्दिने समये प्रात कालिकस्याभावस्यानिन्द्रियसन्निकृष्टस्य सभवति प्रत्यक्षेण ग्रहणम् । तस्येन्द्रियसन्निकृष्टवर्तमानविषयकत्वात् । ननु योग्यानुपलब्धिरपि तदानीं नास्ति, न हि मध्यन्दिने प्रातस्तनस्यार्थस्य उपलब्धियोग्यताऽस्ति । सत्यम्—प्रत्यक्षयोग्यता नास्ति स्मृतियोग्यता त्वस्त्येव । प्रातस्त देशमध्यासीनेन तत्रागत गजादि ग्रहीतव्यः मध्यन्दिने च सत्या सुस्मूर्षाया स्मर्तव्यश्च । यथा ग्रहीतव्यत्वे सत्यग्रहण तथा स्मर्तव्यत्वे सत्यस्मरण मध्यन्दिनवेलाया विद्यमान प्रातस्तनमभाव बोधयति । अत एव प्रमाणाभाव इत्यत्र स्मरणाभावोऽपि ग्राह्य । स्मरणाभावोऽपि हि फलत प्रमाणाभाव एव । प्रमाणस्य स्मरणफलत्वात् ॥

सा चानुपलब्धि. योग्यतासहितैव प्रमाणम् । योग्यता च प्रतियोगिसत्त्वप्रसजनप्रसजितप्रतियोगिकत्वरूपा । प्रसजन तु यद्यत्र घटस्स्यात्तर्ह्युपलभ्येतेत्याकारकम् । सा च ज्ञाततया सहकारिणी, अनुपलब्धिस्तु स्वरूपसती । न तु ज्ञाता । इतरथा तस्या अप्यभावरूपत्वेन अनवस्थापातात् । योग्यताज्ञानार्थमेव हि सूक्ष्मार्थाभावग्रहणार्थं सूक्ष्मबोधकनेत्राशुसपातार्थं प्रयस्यन्ति प्राणिन । तत्र योग्यतासंदेहे विपर्यये वा अभावेऽपि सशयो विपर्ययो वा भवति । यथा— अन्धकारे पतितमङ्गुळीयक कराभ्यामन्विष्यन्पुरुष· सर्वोर्वीस्पर्शसंदेहेऽभावेऽपि संदेग्धि । तथैव सर्वतोऽस्पर्शेपि सर्वाभिमर्शनभ्रमे अभावेऽपि भ्राम्यति । अत· योग्यतैव ज्ञाता सहकरोति ॥

शाक्यादयस्तु निस्स्वभावमभावमवस्तुरूप तुच्छ मन्यन्ते । तस्य च प्रमाणनिरूपण परिहसन्ति । तथासति यत्खलु दधिरूप प्रागभूत्वा भवति तदुपादेयम् । यच्च प्रागवस्थित क्षीररूप पश्चान्न भवति तदुपादानम् । सोऽय कार्यकारणविभाग गौरश्वो न भवति अश्वो

## चित्राक्षेप

ननु प्रत्यक्षादीन्यन्यानि भवन्तु नाम प्रमाणानि । शब्दस्तु न प्रमाणम् । कुतः—

अनिमित्त विद्यमानोपलम्भनत्वात् ॥ ९ ॥

अनिमित्त अप्रमाणं शब्द । यो ह्युपलम्भविषयो नोप-

न भवति गौ विषाणशून्यश्शश' इत्यादय व्यवहारा' प्रागभावादि-निबन्धना असत्यभावे नोपपद्येरन्नित्यवश्य वस्त्वेवाभावो न तुच्छ इत्य-भ्युपगन्तव्यमिति ॥

एव षट् प्रमाणानि निरूपितानि । सम्भवैतिह्यलोकप्रसिद्धिचेष्टा-लिपिप्रातिभाख्यानि षडपराणि प्रमाणानि क्वचित्क्वचिदङ्गीकृतान्यप्येते-ष्वेव यथायथमन्तर्भवन्तीति सिद्धान्त ॥

पूर्वं भाष्यकार स्वमतेन सूत्राणि व्याचक्षाण चोदनासूत्रे "नन्वतथाभूतम्" इत्यादिना प्रमाणान्तरपारतन्त्र्यात् स्वातन्त्र्याभावाच्च शब्द प्रमाणमित्याक्षिप्य समाहितवान् । इदानीं तु वृत्तिकारमतेन असवादविसवादाभ्या प्रागुक्तमेवाक्षेप सूत्राभिप्रेत दर्शयितु सूत्रमवता-रयति—ननुप्रत्यक्षादीनीति ॥ अत्र "अनिमित्त विद्यमानोपलम्भन-त्वात्" इति पृथक्पूर्वपक्षसूत्रम् । तस्यार्थमाह—अनिमित्तमित्यादिना ॥ विद्यमानोपलम्भनत्वात् ।विद्यमानमुपलम्भन उपलम्भक इन्द्रिय यस्य पश्वा-देरस्ति स विद्यमानोपलम्भन , तस्य भव. पश्वाद्युपलम्भकस्येन्द्रियस्य सद्भावादित्यर्थ । एतेन योग्यता प्रदर्शिता । तदाह —यो हीति ॥ एतेन प्रत्यक्षानुपलब्धिविरुद्धश्शब्द इत्युक्त भवति । अय प्रयोग.— "चित्रया यजत" इत्यादिचोदना मृषा प्रत्यक्षासवादरूपप्रत्यक्षानुप-लब्धिविरुद्धत्वात् सप्रतिपन्नवाक्यवदिति ॥

लभ्यते स नास्ति यथा शशस्य विषाणम्। उपलम्भकानि चेन्द्रियाणि पश्वादीनाम्। न च पशुकामेष्ट्यनन्तरं पशव उपलभ्यन्ते। अतो नेष्टिः पशुफला। कर्मकाले च फलेन भवितव्यम्। यत्काले हि मर्दनं तत्काले मर्दनसुखम्। कालान्तरे फलं दास्यतीति चेत् न, न कालान्तरे फलमिष्टेरित्यवगच्छामः। कुत? यदा तावदसौ विद्यमानाऽऽसीत्तदा फलं न दत्तवती। यदा फलमुत्पद्यते तदाऽसौ नास्ति। असती कथं दास्यति। प्रत्यक्षं च फलकारणमन्यदुपलभामहे। न च दृष्टे कारणे सति अदृष्टं कल्पयितुं शक्यते प्रमाणाभावात्। एवं दृष्टापचारस्य वेदस्य स्वर्गाद्यपि फलं न भवतीति मन्यामहे॥

दृष्टविरुद्धमपि भवति किंचिद्वचनम्—पात्रचयनं विश्वाया-

अतो नेष्टिरिति॥ चित्रायागमपि पक्षीकृत्य पशुसाधनत्वाभाव साधयितु शक्य इत्यर्थः। अथ प्रयोग.—चित्रायाग पशुसाधनत्वाभाववान् स्वकाले फलशून्यत्वात् यत् यस्य साधन तत् स्वकाले फलवत् यथा मर्दनमिति व्यतिरेकोदाहरण चात्राभिप्रेतम्॥ शङ्कते—कालान्तरे इति॥ अन्वयव्यतिरेकाभ्या व्यभिचारमभिप्रेत्य समाधत्ते—नेति॥ असती कथमिति॥ अपूर्वद्वारकत्व तु शब्दान्नावधार्यत इति भाव.। साध्यसाधनभावस्यान्यथासिद्धिमप्याह—प्रत्यक्ष चेति॥ अन्यत् सेवाप्रतिग्रहादिकम्। क्वचिन्मिथ्यात्वे सर्वं मिथ्येति गम्यत इत्याह—एवदृष्टेति॥

एवमसंवादेनाप्रामाण्यमुक्त्वा विसवादेनाप्याह-दृष्टविरुद्धमपीति॥ अत्रमत्र प्रयोगोऽभिसाहितः—"स एष यज्ञायुधी" इत्यादिवाक्य मिथ्या प्रत्यक्षविरुद्धत्वात् "अम्बुनि मज्जन्त्यलाबूनि" इत्यादिवाक्यवदिति।

ह—"स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याति" इति प्रत्यक्षं शरीरकं व्यपदिशति। न च तत्स्वर्गं लोकं यातीति। प्रत्यक्षं हि तद्दह्यते। न चैष यातीति विधिशब्दः। एवंजातीयकं प्रमाणविरुद्धं वचनमप्रमाणम्। अम्बूनि मज्जन्त्यलाबूनि। ग्रावाणः प्लवन्ते इति यथा। तत्सामान्यादग्निहोत्रादिचोदनास्वपि नाश्वासः। तस्मान्न चोदनालक्षणोऽर्थो धर्मः॥

औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धस्तस्य ज्ञान(मुपदेशः)॥

तुशब्दः पक्षं व्यावर्तयति। अपौरुषेयश्शब्दस्यार्थेन संबन्धः, तस्य अग्निहोत्रादिलक्षणस्यार्थस्य। ज्ञानं प्रत्यक्षादिभिरनवगम्यमानस्य। तथाच चोदनालक्षणं सम्यक्प्रत्यय इति।

नन्वात्मनस्स्वर्गगमनात् कथं प्रत्यक्षविरोधः? देहातिरिक्तस्यात्मनोऽभावात् सतोऽपि यज्ञायुधसंप्रयोगविरहात् विभोः कर्तृत्वासंभवेन यजमानत्वासंभवात्। अतश्शरीरस्यैव स्वर्गगमनं प्रत्यक्षविरुद्धम्। नचैष यातीति विधिशब्द इति॥ विधिशब्दनिराकरणं चित्रोदाहरणाद्विशेषप्रदर्शनार्थम्। सति हि विधौ भविष्यत्ताऽपि फलस्य स्यात्। विधिप्रामाण्यादेव च शरीरादन्यमात्मानं कल्पयित्वा विरोधः परिह्रियेत। वर्तमानापदेशे तु तस्मिन् काले स्वर्गगमनं विरुद्धं भस्मीभावदर्शनात् विसंवाद एव स्फुटः स्यादिति। एतद्दृष्टान्तेन सर्वो वेदः मिथ्येत्यनुमातुं शक्यमित्याह—तत्सामान्यादिति॥

एवं पूर्वपक्षसूत्रं व्याख्याय सिद्धान्तसूत्रमाह—औत्पत्तिकस्त्विति॥ स्वव्याख्याया तुरवधारणार्थे। इदानीं सिद्धान्तसूत्रसूचकं इत्याह—तुशब्द इति॥ अपौरुषेय इत्यौत्पत्तिकशब्दफलितार्थकथनम्। ज्ञानमिति प्राग्वत् करणे ल्युट्, ज्ञापकमित्यर्थः। शिष्टं प्राग्वत्।

पौरुषेये हि शब्दे य प्रत्यय तस्य मिथ्याभाव आशङ्क्येत। परप्रत्ययो हि तदा स्यात्। अथ शब्दे ब्रुवति कथं मिथ्येति। न हि तदानीं अन्यत पुरुषादवगतिमिच्छामः। ब्रवीतीत्युच्यते बोधयति बुध्यमानस्य निमित्त भवतीति। शब्दे च निमित्ते स्वय बुध्यते। कथं विप्रलब्धं ब्रूयान्नैतदेवामिति। न चास्य चोदना स्याद्वा नवेति सांशयिक प्रत्ययमुत्पादयति। न च मिथ्यैतदिति कालान्तरे देशान्तरेऽवस्थान्तरे पुरुषान्तरे वा पुनरव्यपदेश्य· प्रत्ययो भवति। योप्यन्यत्र प्रत्ययविपर्यासं दृष्ट्वा अत्रापि विपर्यसिष्यतीत्यानुमानिकः प्रत्यय उत्पद्यते सोप्यनेन प्रत्यक्षेण प्रत्ययेन विरुध्यमानो बाध्यते। तस्माच्चोदनालक्षण एव धर्मः ॥

अपौरुषेयात्पौरुषेयस्य विशेषमाह—पौरुषेये हीति ॥ परप्रत्ययो हि तदा स्यादिति ॥ नस्वय प्रत्यय इत्यर्थ । वक्तृप्रामाण्याधीन प्रामण्यमस्यति भाव । तस्मादपौरुषेयस्य विशेषमाह—अथेति ॥ तत्र वक्तृप्रामाण्याधीना प्रामाण्य नास्तीत्याह—न हि तदानीमिति ॥ अथाज्ञानलक्षणमप्रामाण्यमपाकरोति—ब्रवीतीत्युच्यत इति ॥ तद्विवृणोति—बोधयतीति। फलितमाह—शब्देचेति ॥ निरपेक्ष प्रामाण्यमिति भाव'। तस्य व्यतिरेकमाह—कथमिति ॥ विप्रलब्ध विरुद्धमित्यर्थ। बोधयति न बोधयतीति च रिद्धमिति भाव। अथ सशयलक्षणमप्रामाण्यमपाकरोति—नचास्येति ॥ अस्य प्रत्यक्षादिभिरनवगतस्य धर्मस्य। अथ विपर्ययलक्षणमप्रामाण्य अबाधितत्वेनापाकरोति—न च मिथ्यैतदिति ॥ मिथ्येत्यस्य विवरण—अव्यपदेश्य इति ॥ स्वाभाविकेन रूपेण न निरूपणीय· मृगतोयवत् पररूपेण निरूपणीय इत्यर्थ· सामान्यतो-

सबन्धाक्षेपः

स्यादेतदेव, नैव शब्दस्यार्थेन सबन्धः । कुतोस्य पौरुषेयता अपौरुषेयता वेति । कथम्?—स्याच्चेदर्थेन सबन्धः क्षुरमोदकशब्दोच्चारणे मुखस्य पाटनपूरणे स्याताम्, यदि संश्लेषलक्षणं संबन्धमभिप्रेत्योच्यते । कार्यकारणनिमित्तनैमित्तिकाश्रयाश्रयिभावसंयोगादयस्तु संबन्धाः शब्दस्यानुपपन्ना एवेति ॥

उच्यते—यो ह्यत्र व्यपदेश्यस्सबन्धः तमेकं न व्यपदिशति भवान्, प्रत्याय्यस्य प्रत्यायकस्य च यः सज्ञासंज्ञिलक्षण इति ।

दृष्टमप्रामाण्यानुमान बाधितत्वादिदोषदुष्टमित्याह— योप्यन्यत्रेति ॥ एतत्सर्वं चोदनासूत्रोक्तमपि वक्तृभेदान्न पुनरुक्तम् । सूत्रार्थमुपसहरति— तस्मादिति ॥

एवं शब्दार्थसबन्धाना नित्यतया दोषाभावेन अपवादभूताप्रामाण्यनिराकरणेन स्वत प्रामाण्य स्थापितम् । अथाप्रामाण्यप्रयोजक सबन्धाभाव तस्य सतोऽपि नित्यत्वाभाव चाशङ्कते—स्यादेतदेवमिति ॥ शब्दो नार्थसश्लिष्ट स्वशून्यदेशवृत्तित्वात् हिमवद्विन्ध्यवदिति प्रयोगः सबन्धाभावेऽभिसहित । तत्रासिद्धि निराह — स्याच्चेदिति ॥ इदं चानुमान वक्ष्यमाणा सश्लेषलक्षणसबन्धातिरिक्तसबन्धानुपपत्तिमनुसधायोक्तम् । तदाह — यदीति ॥ इतरसबन्धानुपपत्तिमाह— कार्येति ॥

शक्त्यात्मकस्संबन्धोऽस्तीति मत्वा समाधत्ते—उच्यते यो हीति ॥ व्यपदेश्यः व्यपदेष्टुमर्हः । अनुपपन्नान् सबन्धानेव केवल भवान् परिगणयति । यश्चोपपन्नः परिगणनामर्हति तमेकं परित्यजति । स च सबन्धः सज्ञासज्ञिलक्षण वाच्यवाचक प्रत्याय्यप्रत्यायक बोध्यबोधक गम्यगमकभावाद्यपरपर्यायः शक्तिरूप इत्यर्थ. । अय भावः—स्वशून्यदेशवृत्तित्वहेतुना सबन्धसामान्यनिषेधे पितापुत्रादिसंबन्धेनानेकान्त-

आह—यदि प्रत्यायकश्शब्दः प्रथमश्रुतः किं न प्रत्याययति। उच्यते—सर्वत्र नो दर्शनं प्रमाणं—प्रत्यायक इति प्रत्ययं दृष्ट्वाऽवगच्छामः। न प्रथमश्रुत इति प्रथमश्रवणे प्रत्ययमदृष्ट्वा। यावत्कृत्स्नश्श्रुतेन इयं संज्ञा अय सञ्ज्ञीत्यवधारितं भवति ताव-त्कृत्स्न श्रुतात् अर्थावगम इति। यथा चक्षु द्रष्टृ न बाह्येन प्रकाशेन विना प्रकाशयतीति अद्रष्टृ न भवति ॥

त्वम्। सश्लेषनिषेधे सिद्धसाधनम्। वाच्यवाचकभावानिषेधे लोक-बाध । स्ववचनविरोधश्च विचारस्यैवानवकाशात् इति ॥

इदमत्रावधेयम्—गमकविशेषा ह्येते इन्द्रिय लिङ्गमभिधायक-मिति। यत्सत्तामात्रेण स्वसन्निकृष्ट गमयति तदिन्द्रियम्। यत्तु व्याप्यतया ज्ञायमान व्यापक गमयति तल्लिङ्गम्। यत्तु गमकत्वावग-मादेव गमयति तदभिधायकम्। तदिह गमकत्वे गृहीते पश्चात्तन्मात्रे-णैव असत्यपि सबन्धान्तरे शब्दादर्थं प्रतिपद्यमान लिङ्गादिविलक्षण अभिधायकस्वरूप गमकत्वलक्षण च सबन्धमध्यवस्यति। तच्च गमकत्व वृद्धेभ्यो गृह्यते। न चात्माश्रयता। पूर्वपूर्ववृद्धेभ्यो गमकत्वग्रहणात् उत्तरोत्तरेषा गमकतोपपत्तेरिति ॥

अथ गवादिशब्द न स्वाभाविकगमकत्वलक्षणशक्तिविशिष्ट' शक्तिग्रहणात्प्रागगमकत्वात् पुरुषविशेषसकेतितदेवदत्तादिशब्दवदितिमत्वा शङ्कते—आह यदीति ॥ चक्षुरादौ प्रदीपादिसहायापेक्षामात्रेण शक्त्य-नपह्नववत् प्रकृते सबन्धग्रहणरूपसहकारिणा करणस्य नान्यथा-सिद्धिरिति मत्वा समाधत्ते—उच्यते सर्वत्रेति ॥ यथा चक्षुरिति ॥ तत्र व्यभिचार इति भाव । तत्र हि सहकारिसपत्ते प्रागगमकत्वरूपो हेतुरस्ति। स्वाभाविकशक्तिशून्यत्वरूप साध्य नास्तीति ॥

यदि प्रथमश्रुतो न प्रत्याययति कृतकस्तर्हि शब्दस्यार्थेन संबन्धः। कुतः? स्वभावतो ह्यसंबद्धावेतौ शब्दार्थौ मुखे हि शब्दमुपलभामहे भूमावर्थम्। शब्दोऽयं न त्वर्थः, अर्थोऽयं न शब्द इति च व्यपदिशन्ति। रूपभेदोऽपि भवति गौरितीमं शब्दमुच्चारयन्ति। सास्नादिमन्तमर्थमवबुध्यन्त इति। पृथग्भूतयोश्च यस्संबन्धः स कृतको दृष्टः। यथा रज्जुघटयोरिति॥

स्फोटवाद

अथ गौरित्यत्र कश्शब्दः? गकारौकारविसर्जनीया इति भगवानुपवर्षः। श्रोत्रग्रहणे ह्यर्थे लोके शब्दशब्दः प्रसिद्धः। ते च श्रोत्रग्रहणाः।

एवं संबन्धसद्भावेऽपि तस्य कृतकत्वरूपमनित्यत्वमाशङ्कते—यदि प्रथमेति॥ सञ्ज्ञात्वं हि वृद्धेभ्योऽवगम्यत इत्युक्तं तेन देवदत्तादिशब्दवत् अस्येयं सञ्ज्ञेति वदद्भिः पुरुषैरेव कृतं स्यादिति भावः। यदि सञ्ज्ञात्वातिरिक्तं किंचित्संबन्धान्तरं स्यात् स्यादप्यस्य नित्यता, न तु तदस्तीत्याह—कुतः स्वभावत इति॥ सर्वस्य हि केनचिदभिन्नेनोपाधिना संबन्धो भवति। न चानयोर्देशः कालो वा एकरूपमुपलभामहे इत्याह—मुखे हीति॥ भिन्नदेशाद्यधिष्ठानादित्यर्थः। तथा च शब्दार्थौ कृतकसंबन्धवन्तौ भिन्नदेशाद्यधिष्ठानात् रज्जुघटवदिति न्यायस्सिध्यतीत्याह—पृथगिति॥

अथ संबन्धस्य नित्यत्वं प्रतिवक्ष्यन् संबन्धाधारभूतयोश्शब्दार्थयोः स्वरूपनिर्णयाय स्फोटवाद आकृतिवादश्च वर्तिष्येते। तत्र तार्किकशाब्दिकादीन् प्रति पृच्छति—अथगौरिति॥ एतत्सिद्धान्तवादिवचनम्। आस्तां तावत्संबन्धः, शब्दस्वरूपमेव तावत्कीदृशमिति पृच्छाम इत्यर्थः। तस्योत्तरं—गकारेत्यादि॥ उपवर्ष इति॥

यद्येव अर्थप्रत्ययो नोपपद्यते । कथम्² एकैकाक्षर-विज्ञाने अर्थो नोपलभ्यते । नचाक्षरव्यतिरिक्तोन्यः कश्चिदस्ति समुदायो नाम, यतोऽर्थप्रतिपत्ति स्यात् । यदा गकार. न तदा औकारविसर्जनीयौ । यदौकारविसर्जनीयौ न तदा गकारः । अतो गकारादिव्यतिरिक्तोऽन्यो गोशब्दोऽस्ति । यतोऽर्थप्रतिपत्तिस्स्यात् । अन्तर्हिते शब्दे स्मरणादर्थप्रतिपत्तिश्चेत्, न–स्मृतेरपि क्षणिकत्वादक्षरैस्तुल्यता ॥

पूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णः प्रत्यायक. इत्यदोषः ॥

अत्र उपवर्षग्रहणान् न वृत्तिग्रन्थस्यानुवाद । किं तु तन्मतेन व्याख्यानान्तरमिति सूच्यते । श्रोत्रग्रहणे हीति ॥ श्रोत्रग्राह्यत्वमेव शब्दलक्षण, न त्वर्थावबोधकत्व शाब्दिकसम्मतमिति भाव । ते चेति ॥ गकारादय इत्यर्थ. । अन्यथा निराबाधसर्वजनप्रतीतिविरोव इति भावः ॥

स्फोटवादमुपन्यस्यति—यद्येवमिति ॥ व्यस्तसमस्तविकल्पयो व्यस्तेऽनुपपत्तिमाह–कथमेकैकेति ॥ समस्तेऽनुपपत्तिमाह–यदा गकार इति ॥ स्वमतमाह–अतो गकारादीति ॥ वर्णाना समुदायभावाभावेऽपि तत्सविदा समुदायभावमाशङ्कते—अन्तर्हित इति ॥ स्मरणपद वर्णानामेकैकव्यक्तित्वेन गृहीतग्राहित्वाभिप्रायेण । स्मरणानामप्यनेकव्यक्तित्वात् क्षणिकत्वात् तुल्यदोषत्वमाह–नेति ॥

सिद्धान्तमाह—पूर्ववर्णेति ॥ अत्र सस्कारशब्दः शक्तिपर । अनन्तरवृत्तित्वपर इति कैश्चित् व्याख्यायते । पूर्ववर्णैरुत्तरवर्णस्य अनन्तरवृत्तित्वेन दृष्टेनैवानुग्रहेणानुगृहीतत्वसभवात् सर्वैरनुगृहीतोऽन्त्यो वर्णः अर्थ प्रत्याययतीत्यर्थ· ॥

नन्वेव शब्दादर्थं प्रतिपद्यामहे इति लौकिक वचनमनुपपन्न स्यात्। उच्यते यदि नोपपद्यते अनुपपन्नं नाम। न हि लौकिकं वचनमनुपपन्नमित्येतावता प्रत्यक्षादिभिरनवगम्यमानोऽर्थः शक्योत्युपगन्तुम्। लौकिकानि वचनानि उपपन्नार्थान्यनुपपन्नार्थानि च दृश्यन्ते। यथा देवदत्त गामभ्याज इत्येवमादीनि। दश दाडिमानि षडपूपा इत्येवमादीनि च ॥

अयमाशय —समस्ता एव वर्णा वाचका । गमनक्रियाक्षणानामिव ग्रामप्राप्तौ ग्रासानामिव तृप्तौ तृणानामिव रज्जौ सस्थानामिवामुखी करणे । क्रमिकाणामपि वर्णाना सकलनाप्रत्ययद्वाराऽन्त्यैव सामर्थ्यम् । सकलनाप्रत्ययश्च स्मर्यमाणानुभूयमानप्राक्तनान्त्यवर्णविषयकतया सदसद्वर्णगोचरश्चित्ररूप । अन्त्यवर्णेपि तिरोहिते असत्सर्ववर्णगोचरो वा चित्राकार प्रत्यय । स च अर्थप्रत्यायनाङ्गमिति निरवकाशा व्यस्तसमस्तादिविकल्पदोषा इति ॥

ननु—"शब्दादर्थं प्रतिपद्यामहे" इति लोकव्यवहारोस्ति। तत्र शब्दशब्द. न सस्कारपर , अप्रसिद्धे । नापि वर्णपरः, प्रत्येकसमुदायविकल्पासभवात् । एकस्य वर्णस्य वाचकत्वायोगात् न प्रथमो विकल्प. । नापि द्वितीय —जातिशब्दत्वात् । जातिवाचकश्शब्द वृक्षः पुरुष इत्यादि. द्विवचनबहुवचनान्तव्यक्तिशब्दप्रयोगे तत्सामानाधिकरण्येन न प्रयुज्यते, यथा—देवदत्तयज्ञदत्तौ पुरुषः, धवखदिरपलाशा वृक्ष इति। एव गकारौकारविसर्जनीया. शब्द इत्यपि ॥ तत्सर्वथा वर्णशब्दवादिनामनुपपन्नोय व्यपदेश इत्याह—नन्वेवंशब्दादिति ॥ उच्यते यदीति ॥ अनुपपन्न नाम अनुपपन्नमिति प्रसिद्धमेवेत्यर्थ । अयमाशय.—किमनेनोपपन्नेनानुपपन्नेन वा कृत्यम् , यद्ययमुपपद्यते ततः किम्। अथापि नोपपद्यते तत· किम्? न हि लोकव्यवहारनिबन्धना वस्तुस्थितिरिति।

ननुच शास्त्रकारा अप्येवमाहुः-पूर्वापरीभूतं भावमाख्यातेनाचष्टे व्रजति पचति इत्युपक्रमप्रभृत्यपवर्गपर्यन्तमिति यथा। न शास्त्रकारवचनमप्यलमिममर्थमप्रमाणकमुपपादयितुम् ॥

अपि च नैवैतदनुपपन्नार्थम्—अक्षरेभ्यस्संस्काराः। संस्कारादर्थप्रतिपत्तिरिति संभवत्यर्थप्रतिपत्तावक्षराणि निमित्तम्। गौण एषोऽर्थप्रतिपत्तौ शब्द इति चेत् न गौणः। अक्षरेषु निमित्तभाव तद्भावे भावात्तदभावे चाभावात् ॥

उपपन्नार्थस्योदाहरण-देवदत्तेति ॥ अभ्याज प्रेरयेत्यर्थ। अनुपपन्नार्थस्योदाहरण—दशेति ॥ अथ लौकिकप्रयोगो यथातथावाऽस्तु, शास्त्रकारप्रयोग' कथमुपपद्यते इत्याशङ्कते—ननु च शास्त्रेति ॥ अत्राख्यातेनाचष्टे इति व्यवहारोस्ति। आख्यातपद धातुपरम्, आख्यातक्यो विभक्तय इति तिङा व्यवहारात्। तथाचाख्यातशब्देनैकवचनान्तेन तिङन्तपदस्फोटो विवक्षित। तिङन्तस्यानेकवर्णसमुदायस्य एकत्वायोगात्। पूर्वापरीभूतमिति ॥ आद्यपरिस्पन्दात्प्रभृत्याफलनिष्पत्ते' पूर्वापरीभावेन लक्ष्यमाण बह्ववयव क्रियालक्षण भावमित्यर्थः। पूर्वापरीभाव निदर्शयति—व्रजति पचतीति ॥ शास्त्रकारव्यपदेशो वा अशास्त्रकारव्यपदेशो वाऽस्तु, कतरच्चेद प्रमाण लोकव्यपदेशो नामेति समाधत्ते—नेति ॥ समुदायैकत्वात् अर्थैकत्वाद्वा पूर्ववर्णानुगृहीतान्त्यवर्णस्य वाचकत्वाद्वा एकबुद्ध्युपारूढत्वाद्वा एकवचनोपपत्तिरिति भाव ॥

ननु शब्दादर्थं प्रतिपद्यामह इत्यत्र अव्यवधान प्रतीयते, वर्णाना क्रमिकत्वात् कथमिदामित्यत आह—अपिच नैवैतदिति ॥ सस्काराणा द्वारत्वेन न 'निमित्तनैमित्तिकभावानुपपत्तिरित्यर्थ। ननु सस्कारद्वारा कारणत्वे सस्कार एव मुख्य कारण स्यात्, सस्कार पर्यायेण स्फोट इष्ट. स्यात्, वर्णात्मकस्तु शब्दः गौणस्स्यादित्याशङ्कते—गौण एषोऽर्थेति॥

अथापि गौणस्स्यात्, न—गौणश्शब्दो मा भूदिति प्रत्यक्षादिभिरनवगम्यमानोऽर्थः शक्य परिकल्पयितुम्। न ह्यग्निर्माणवक इत्युक्ते अग्निशब्दो गौणो मा भूदिति ज्वलन एव माणवक इत्यध्यवसीयते। न च प्रत्यक्षो गकारादिभ्योन्यो गोशब्द इति। भेददर्शनाभावादभेददर्शनाच्च। गकारादीनि हि प्रत्यक्षाणि। तस्माद्गौरिति गकारादिविसर्जनीयान्त पदमक्षराण्येव। अतो न तेभ्यो व्यतिरिक्तमन्यत्पदं नामेति॥

अत्र सस्कारस्य व्यापारत्वेन व्यापारव्यवायस्य सर्वत्र नियतत्वात् नियतान्वयव्यतिरेकयोरक्षरेष्वनुभूयमानत्वात् अक्षराणि न गौण इति समाधत्ते—न गौण इति॥ अत्र न गौण इति भिन्न वाक्यम्, उत्तरत्रान्वये शब्दे चोदित गौणत्व तत्रैव युक्त परिहर्तुम्। निमित्तभावे तु तत्परिहारोऽसगतस्स्यात्। अक्षराणा गौणत्वाभावे हेतुमाह—अक्षरेषु निमित्तभाव इति॥

अथ च केचित् शाब्दिका गौरित्येव गकारादिविलक्षण शब्दान्तर अखण्ड प्रत्यक्षमवगम्यते इत्याहु, स एव ह्यवयविवाद। तन्मतमुपन्यस्यति—अथापीति॥ गौण गौरित्यवयवी अखण्ड मुख्यश्शब्दः वर्णात्मकस्तु गौण एवेत्यर्थ। न हि कस्य चित् गौणत्वापातभयात् अप्रामाणिकार्थकल्पनं युक्तमिति प्रतिबन्दीप्रदर्शनपुरस्सर समाधत्ते—नेति॥ अयमाशयः—गोशब्दे अज्झलोस्सश्लेषविशेषात् देवदत्तशब्दादाविव वर्णविवेक प्रतिपत्तारो न जानन्ति, तावन्मात्रेणाखण्ड गोशब्द इति भ्रम। पूर्वोक्ता चित्रा बुद्धिरपि निमित्त भ्रमे। तादृशभ्रममूला कल्पना न युक्तेति। किमनेन बहुनोक्तेन, सर्वं हि वस्तु जातमबाधितप्रतीतिव्यवस्थ्याप्यमित्यभिप्रायेणाह—न च प्रत्यक्ष इति॥ एव स्फोट निरस्य प्रतिज्ञात वर्णसिद्धान्त निगमयति—तस्मादिति॥ सस्कारकल्पनाया गौरव शङ्कते—नन्विति॥ शब्दकल्पना स्फोटकल्पनेत्यर्थ। अय भाव.—

**ननु संस्कारकल्पनायामप्यदृष्टकल्पना । उच्यते—शब्दकल्पनायां सा च शब्दकल्पना च । स्मादक्षराण्येव पदम् ॥**

स्फोटवादिनामपि स्वरवर्णात्मकाना ध्वनीना स्फोटाभिव्यक्तौ साहित्यमेकवक्तृकत्व क्रमश्चापेक्ष्यते । तत्र साहित्यासभवात् सस्काराख्यशक्तिकल्पनाऽप्यस्तीति तवैव गौरवमिति भाव ॥

इदमिह स्फोटवादरहस्यम्—विभूनामेकैकव्यक्तीना वर्णाना समूह पद पदसमूहो वाक्यमिति वैदिकास्सिद्धान्त । स्फोटसिद्धान्तस्तु—न हि वर्णाना समूह कश्चिदस्ति वास्तव । तेन कुतस्तत्समूह पद भविष्यति । तदभावाच्च न तरा पदसमूहो वाक्यमवकल्पते । न च वर्णाना व्यस्तसमस्तविकल्पोपहतत्वेन वाचकत्वमुपपद्यते । तस्मात् स्फुटयते व्यज्यते इति व्युत्पत्तिसिद्ध स्फोटपदाभिधेय श्रोत्रग्राह्य नित्य निरवयव निष्क्रमक शब्दशब्दवाच्य अर्थप्रतिपादक । यतोऽर्थप्रतिप्रत्तिम्स शब्द इति शब्दलक्षणम् । स च वर्णै स्वरव्यञ्जनात्मकैरभिव्यज्यते । तत्र चाभिव्यक्तौ न विकल्पा क्रमन्ते—प्रथमवर्णश्रवणवेलायामेव स्फोटोऽभिव्यक्तो भवति । द्वितीयादिश्रवण तदवगतेरेवातिशय करोति । यथा रत्नपरीक्षाया प्रथमदर्शने रत्नस्वरूपममल प्रकाशमानमपि पुन पुन परीक्षमाणाना चरमे चेतसि चकास्ति निरवद्य रत्नतत्त्वमिति केचिदाचक्षते ॥

अन्ये तु ध्वनय एव स्फोटस्य व्यञ्जकाः । ते च मरुत एव । तैश्चाभिव्यज्यमान ताल्वादिस्थानकरणसयोगोपाधिवशोपप्लवमाननानाकारगकारादिभागयोगीव स्फोट प्रतिभासते, दृष्ट चोपाधिवशात् असत्यमपि रूपमवभासमान, यथा—कृपाणमणिदर्पणादिव्यञ्जकभेदेन श्यामदीर्घादिरूप वदनस्य । नादात्मको हि शब्द वीणावेणुमृदङ्गपटहादिव्यञ्जकभेदेन नानात्वमुपगच्छन् दृश्यते । तस्मान्न पारमार्थिका एव ते वर्णा इति ॥

किं च पद वाक्यमित्येकाकारप्रतीतिरस्ति, न च भिन्ना वर्णा. स्त्यामालम्बनीभवितुमर्हन्ति, न हि सामान्यप्रत्ययो व्यक्त्यालम्बन, अवयविप्रत्ययो वा अवयवालम्बन । नच सेनावनादिबुद्धिवदयथार्थो पदवाक्यबुद्धि बाधकाभावात् । तस्मात्पदबुद्धे पदस्फोटः वाक्यबुद्धे वाक्यस्फोटो विषय इति ॥

अथ स्यात्-यदि निरवयवः स्फोटात्मा वाक्य भवति, कथ तस्य पदान्यवयवा भवितुमर्हन्तीति । उच्यते—ध्वन्युपाधिबोधप्रवृत्तवर्णभेदावभासविप्रलब्धबुद्धिं प्रतिबोधयितु पदस्फोट एव निरवयव प्रथम दर्शित' । परमार्थतस्तु पदस्फोटोऽपि वर्णवन्नास्त्येव। वाक्यमेव निरवयव. स्फोट निरवयवस्यैव वाक्यार्थस्य बोधक । अवयवकल्पनाया हि वाक्यस्यावयवा पदानि, तदवयवा वर्णा . एव वर्णानामप्यवयवैर्भवितव्यम् । तदवयवानामप्यवयवान्तरैरित्यानन्त्यात् का व्यवस्था स्यात् । यदि वर्णेषु विरन्तव्य वाक्य एव विरम्यताम् ॥

अर्थोऽपि वाक्यस्यैक एव नरसिंहवत् पानकवत् चित्ररूपवत् श्रीरागवत् । नरसिंहो नाम न नरार्थ नापि सिंहार्थ । पानकमपि शर्करानागकेसरमरिचादिभ्योऽर्थान्तरम् । सिन्दूरहरिताललाक्षादिभ्योऽन्यदेव चित्र रूपम् । षड्जर्षभगान्धारधैवतादिभ्योऽन्य एव श्रीराग । तथा पदेभ्यो वाक्य पदार्थेभ्यो वाक्यार्थश्चार्थान्तरमेव । तस्मात्प्रकृतिप्रत्ययांशवत् असत्पदार्थकल्पन वाक्यार्थावगमोपायतया आश्रीयते । भवतीत्यत्र भूशब्द. प्रकृति. क्वचिदन्वाख्यायते । क्वचिद्भवशब्द. । प्रत्ययादेशागमगुणवृद्धिवर्णलोपाद्यन्वाख्यानविसंवादात् क पारमार्थिकः प्रकृतिप्रत्ययविभाग । कल्पनामात्र त्वेतत् इय प्रकृतिरय प्रत्यय इति । सराम इत्यादौ नामाख्यातसाधारणवर्णसन्निवेशदर्शनात् न नियत तेषा रूपम् । क्वचिन्निश्चेतुमपि न पार्यते—कालेनदन्तिनागा इत्यादौ । कालेन

**अथ गौरित्यस्य शब्दस्य कोऽर्थः ? सास्नादिविशिष्टा आकृतिरिति ब्रूमः । नन्वाकृतिस्साध्याऽस्ति वा न वा इति ।**

कृष्णेन दन्तिना गजेन आगा त्वामिति वा, काले समये नदन्ति शब्दायन्ते नागाः गजा इति वा संशयसंभवात् । तस्मादनियमान्न पद-पदार्थविभागः पारमार्थिकः । तस्मान्निरस्तावयवं तथाविधस्यैव वाक्यार्थस्य वाचकमिति सिद्धम् ॥

ननु यथा पदेषु वर्णा न सन्ति वाक्येषु पदानि न सन्ति । तथा महावाक्येष्ववान्तरवाक्यानि न स्युः, महावाक्यान्यपि प्रकरणे न स्युः, एवं प्रकरणान्यपि शास्त्रे । ततश्चैकमेवेदं शास्त्रतत्त्वं अविभागमद्वयमापततीति चेत्, उच्यते—शब्दब्रह्मैवेदमद्वयं अनाद्यविद्यावासनोपप्लवमानभेदं अर्थभावेन विवर्तते, न तु वाचकाद्विभक्तं वाच्यं नाम किंचिदस्ति, तस्मात्काल्पनिक एव सर्वो विभाग इति ॥

सा चेयं वाक् वैखरी मध्यमा पश्यन्तीति त्रेधा विभज्यते । विखर इति देहेन्द्रियसंघातः । तत्र भवा वैखरी केवलं व्यवहारानुगुणा । या पुनरन्तस्संकल्प्यमानक्रमवती श्रोत्रग्राह्यवर्णरूपाभिव्यक्तिरहिता सा मध्यमा । या तु ग्राह्यभेदक्रमरहिता स्वप्रकाशसंविद्रूपा वाक् सा पश्यन्ती । तदुक्तम्—(वाक्यपदीटीका १–१४४ श्लो)—

अविभागा तु पश्यन्ती सर्वतस्संहृतक्रमा ।
स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी ॥

इति । इममेव च सिद्धान्तं महाकविः कालिदासोऽपि रघुवंशकाव्यारम्भे "वागर्थाविव संपृक्तौ" इति अनुसंहितवानिति संक्षेपः ॥

अ कृतिवादः

वाचकनिरूपणानन्तरं वाच्यं निरूपयति—अथ गौरिति ॥

**न प्रत्यक्षा सती साध्या भवितुमर्हति । रुचक स्वस्तिको वर्धमानक इति हि प्रत्यक्षं दृश्यते । व्यामोह इति चेन्न–नासति प्रत्ययविपर्यासे व्यामोह इति शक्यते वक्तुम् ॥**

आकृति जाति सामान्यमिति पर्याय । एकबुद्धिनिमित्त यत्सामान्य तज्जातिरूपामिति तार्किकादय प्राहु । सारूप्यरूपमिति कापिला । अपोहरूपामिति सौगता । सस्थानमिति पातञ्जलादय । एव सामान्यस्वरूपे विवादेऽपि वाच्यत्वे न विवाद । स्वलक्षणान् विशेषानेव पदार्थमिच्छन्ति वैभाषिका । सामान्यमेव सन्मात्र पदार्थमिच्छन्ति केचिद्वेदान्तिन. । समानाना भावो हि सामान्य. तत्कथमसत्सु बहुषु विशेषेषु स्यात् । समानात्मनो भावान् विशिंषन्तीति विशेषा । ते च कथमसति सामान्ये स्युरिति नान्यतरेण विना इतरस्यात्मलाभ । तस्मादुभय सिद्धम् । तत्रापि सामान्यस्य विशेषात्मत्व विशेषाणा सामान्यात्मत्व चोपलम्भबलासिद्धमिति तयोरत्यन्तभेदवाद न सम्मत ॥

साम्रादिविशिष्टाऽऽकृतिरिति ॥ एकावयविसबन्धेन सास्नाद्युपलक्षिता जातिरित्यर्थ । अस्ति हि तेषा सास्नादीनामेकावयविसबन्धः जात्यन्तरेभ्यो गोत्वेनासाधारण । तेन जातिमुपलक्षयितु सास्नाद्युपादानम् । अन्यथा पिण्डे सत्तादिजातीना बह्वीना समवायात् कथं विनोपलक्षणेन गोशब्दवाच्य विविच्य निर्दिश्यतेति । जाति व्यक्त्यनतिरिक्तः व्यक्त्यज्ञानेऽज्ञायमानत्वात् यो यदज्ञाने न ज्ञायते स तदनतिरिक्त वृक्षानतिरिक्तवनत् इत्यन्तर्नीतानुमानाभिप्रायेण विकल्पयति–नन्विति ॥ साध्या अनुमेया । साध्यमानापि जाति. व्यक्तितो नातिरिच्यते इति भाव । तस्यानुमानस्य प्रत्यक्षेण बाधमाह—नप्रत्यक्षा सतीति ॥ रुचक इति ॥ रुचकत्वस्वास्तिकत्ववर्धमानकत्वादीना पिण्डापेक्षया पृथक्त्वेन प्रत्यक्षावगतत्वादित्यर्थः । प्रत्यक्षस्य अनुगतम-

वनवाद

**नन्वसत्यप्यर्थान्तरे एवंजातीयको भवति प्रत्ययः पङ्क्तिः यूथं वनमिति यथा इति चेत्, न—असंबद्धं इदं वचनमुपन्यस्तम्।**

त्ययस्य भ्रान्तित्वमाशङ्क्य कारणदोषबाधकप्रत्ययविरहान्निरस्यति—व्यामोह इत्यादिना ॥

केचित्तु—अत्र रुचकाद्युदाहरणात्संस्थानमेव सामान्यमिति मन्वते। ते हि वाय्वग्न्यादिषु अनियतसंस्थानपरिमाणेषु गुणेषु कर्मसु च वायुत्वाग्नित्वगुणत्वकर्मत्वरूपानुगतधर्मप्रत्यभिज्ञया प्रतिबोद्धव्या इत्याकृत्यधिकरणे भाष्यकृदेवाभिधत्ते। जाते वृत्तिविकल्पादिदौस्थ्यं तु निरवयवेषु कृत्स्नैकदेशविकल्पानवसरात् व्यासज्यवृत्तित्वरूपतृतीयप्रकारसंभवान्निरस्यते ॥

नन्विति ॥ भवति प्रत्यय इति ॥ जात्यादिबुद्धिसदृशः पङ्क्तिः यूथं वनमित्यादिः प्रत्यय इत्यर्थः। अयं भावः—सिद्धान्तिना हि "न प्रत्यक्षा सती" इति ग्रन्थेन जातिः व्यक्तितः पृथगस्ति व्यक्तिव्यतिरेकेण गृह्यमाणत्वात्, यदेवं तदेवमिति जातिसद्भावेऽनुमानमुपन्यस्तमिति मत्वा पूर्वपक्षी वनोपन्यासेन तस्यानुमानस्य व्यभिचारं वक्ति—वनस्य हि वृक्षव्यतिरेकेण गृह्यमाणत्वेऽपि पृथगस्तित्वं नास्तीति ॥

समाधत्ते—नासंबद्धमिति ॥ अयमाशयः—यत्पूर्वपक्षिणोक्तं जात्यसद्भावानुमानं तस्य प्रत्यक्षेण बाधितत्वमुक्तं, न प्रत्यक्षा सतीत्यनेन ग्रन्थेन। तस्य ग्रन्थस्य जातिसद्भावानुमाने तात्पर्यं गृहीत्वा व्यभिचारप्रदर्शनं असंबद्धवचनमिति ॥

अथ असत्यर्थान्तरे इत्यादिग्रन्थस्य वनादिबुद्धिवत् जातिबुद्धेरपि प्रत्यक्षाभासत्वात् अनुमानबाधोद्धार एव तात्पर्यम्, अथवा जातिसद्भाववादिनः सिद्धान्तान्तरस्य दूषणे तात्पर्यं इति द्वेधा विकल्प्याद्य अनुव-

किमसति वने वनप्रत्ययो भवतीति प्रत्यक्षमेवाक्षिप्यते वृक्षा अपि न सन्तीति। यद्येव प्रत्युक्तस्स माहायानिक पक्षः, अर्थविषया हि प्रत्यक्षबुद्धिः न बुद्ध्यन्तरविषयेति ॥ अथ किमाकृतिसद्भाववादी उपालभ्यते—सिद्धान्तान्तरं ते दुष्यतीति वनेपि सति वनप्रत्ययः प्राप्नोतीति। एवमपि प्रकृतं दूषयितुमशक्नुवतः तत्सिद्धान्तान्तरदूषणे निग्रहस्थानमापद्यते, असाधकत्वात्। स हि वक्ष्यति दुष्यतु यदि दुष्यतु। किं तेन दुष्टेन अदुष्टेन वा प्रकृतं त्वया साधितं भवति? मदीयः पक्षो दूषितो भवतीति ॥

वृक्षव्यतिरिक्तं वनं यस्मान्नोपलभ्यते अतो वन नास्तीत्यवगम्यते। यदि वने अन्येन हेतुना सद्भावविपरीतः प्रत्यय उत्पद्यते मिथ्यैव वनप्रत्यय इति ततो वन नास्तीत्यवगच्छामः। न च गवादिषु प्रत्ययो विपर्येति। अतो वैषम्यम् ॥

इति—किमसति वने इति ॥ तर्हि शून्यवादोऽय माहायानिकसम्मत. प्रागेव शून्यवादे "अर्थविषया हि प्रत्यक्षबुद्धि" इत्यनेन प्रतिक्षिप्त इति समाधत्ते—यद्येवमिति ॥ द्वितीय विकल्पमनुवदति—अथ किमाकृतीति ॥ वनेऽपि सतीति ॥ वस्तुतोऽसत्यामपि जातौ प्रतीतिमात्रेण यदि जातिरस्ति, तर्ह्यसदपि वनं प्रतीतिमात्रेण स्यादिति भावः। अप्रकृतोपन्यासेन प्रकृतस्य न कापि क्षतिरिति समाधत्ते—एवमपीति ॥ स हीति ॥ सिद्धान्तीत्यर्थ ॥ वचनप्रकार विशदयति—दुष्यत्विति ॥ विफलोऽयमुपन्यास इति भाव. ॥

स्वसिद्धान्तमाह—वृक्षेति ॥ वनबुद्धिजातिबुद्ध्यो. वैलक्षण्यमाह—यदि वन इति ॥ अन्येन हेतुनेति ॥ देशकालाद्यन्यतमेन उपाधिनेत्यर्थः। न च गवादिष्विति ॥ गोत्वादिजातिप्रत्यय इत्यर्थः ॥ बाधितत्वाबाधितत्वलक्षण विशेषसत्त्वात् एव जातीयकत्वमपि नास्तीति भाव. ॥

अथ वनादिषु नैव विपर्येति न ते सन्तीति । तस्मादसबद्धः पङ्क्तिवनोपन्यास । अत उपपन्न जैमिनिवचन आकृतिश्श ब्दार्थ इति । यथा चाकृतिः शब्दार्थ तथोपरिष्टान्निपुणतरमुपपादयिष्याम इति ॥ १-३-३३ ॥

सबन्धाक्षेपपरिहार

अथ संबन्धः क इति । यत् शब्दे विज्ञाते अर्थो विज्ञायते स तु कृतक इति पूर्वमुपपादित, तस्मान्मन्यामहे—केनापि पुरुषेण शब्दानामर्थैस्सह सबन्धं कृत्वा संव्यवहर्तुं वेदाः प्रणीता इति । तदिदानीमुच्यते–अपौरुषेयत्वात्सबन्धस्सिद्ध इति [?] कथं

एव वृक्षातिरिक्तस्य वनस्य बाधकप्रत्ययसत्त्वादसत्त्वमुपपादितम् । यदि तु नाय विशेषो घटते इति कश्चिदभिनिविशेत त प्रतीदमाह– अथ वनादिष्विति ॥ सर्वथाऽपि पङ्क्तिवनोपन्यास. असबद्ध इत्याह — तस्मादिति ॥ आकृतिवादमुपसहरति—अत इति ॥ जैमिनिवचन "आकृति क्रियार्थत्वात्" इति सूत्र आकृतेश्शब्दार्थत्वव्यवस्थापनपरम् । तत्प्रकारस्तूत्तरत्र भविष्यतीत्याह—यथेति ॥ उपरिष्टात् तृतीयपादे त्रयस्त्रिंशे सूत्र इत्यर्थ ॥

एव शब्दार्थचिन्ताव्यवहित सबन्धः नित्यानित्यचिन्तार्थं पुनस्मार्यते—अथ सबन्ध' क इति ॥ प्रागुक्तमनुभाषते—यदिति ॥ अव्ययमिद, येन सबन्धेन शब्दज्ञानादर्थज्ञान स' शक्तिसज्ञाद्यपरपर्याय' कृतकश्चेति सबन्धाक्षेपवादे प्रोक्तमित्यर्थ. । जगदादिपक्षेण समयलक्षण सबन्ध शङ्कते–तस्मादिति ॥ अपौरुषेयत्व प्रतिजानीते–तदिदानीमिति ॥ कत्रभाव हेतु वक्ति—कथमित्यादिना ॥ स्वरूपासिद्धिमभावप्रमाणेन परिहरति—कथ सबन्धेति ॥ अप्रत्यक्षमन्यथासिद्धमिति पुनरसिद्धिमाशङ्क्य—समाधत्ते—ननु चिरेत्यादिना ॥

पुनरिदमवगम्यते, अपौरुषेय एष संबद्ध इति। पुरुषस्य संबन्धुरभावात्। कथं संबन्धा नास्ति? प्रत्यक्षस्य प्रमाणस्याभावात्। तत्पूर्वकत्वाच्चेतरेषां प्रमाणानाम्। ननु चिरवृत्तत्वात् प्रत्यक्षस्याविषयो भवेदिदानीतनानाम्। न हि चिरवृत्तस्सन्न स्मर्येत। न च हिमवदादिषु कूपारामादिवत् अस्मरणं भवितुमर्हति। पुरुषवियोगो हि तेषु भवति देशोत्सादेन कुलोत्सादेन वा नच शब्दार्थव्यवहारवियोगः पुरुषाणामस्ति॥

स्यादेतत्—संबन्धमात्रव्यवहारिणः निष्प्रयोजनं कर्तृस्मरणमनाद्रियमाणाः विस्मरेयुरिति। तन्न—यदि हि पुरुषः कृत्वा संबन्धं व्यवहारयेत् व्यवहारकालेऽवश्यं स्मर्तव्यो भवति। सम्प्रतिपत्तौ हि कर्तृव्यवहर्त्रोरर्थः सिद्ध्यति न विप्रतिपत्तौ। न

अयमाशयः—यदि हि कश्चित् पदार्थसंबन्धं कृत्वा वेदवाक्यं व्यवहृतवान् तदाऽवश्यं समयव्यवहारयोः एककर्तृकत्वं कर्तुराप्तत्वं च प्रतिपत्तृभिः स्मर्तव्यं, नच वेदादर्थं प्रतिपद्यमानाः समयकर्तारं तेन सह वेदवक्तुरेकत्वं तस्य चाप्तत्वं स्मरन्तो दृश्यन्ते। बौद्धादयोऽपि हि स्वागमकर्तारं स्मरन्ति। ततश्चावश्यं स्मर्तव्यत्वमुक्तं भवति, ततश्च नान्यथासिद्धं चिरवृत्तत्वेन अप्रत्यक्षमिति। तदेवोपपादयितुं शङ्का, समाधानं च— नच हिमवदित्यादिना॥

प्रयोजनाभावादस्मरणमाशङ्क्य समाधत्ते— स्यादेतदित्यादिना॥ सम्प्रतिपत्तिः एकत्वाप्तत्वनिश्चयः। उदाहरणं न हीति॥ अपाणिनेः पाणिनिभिन्नस्य। अननुमन्यमानस्य अनभ्युपगन्तुः। समयमजानत इति भावः। अपिङ्गलस्य छन्दश्शास्त्रकर्तृपिङ्गलाचार्यभिन्नस्य। सम्प्रतिपद्येते एकत्वाप्तत्वनिश्चयविषयीक्रियेते। पाणिनित्वेन पिङ्गलत्वेन ज्ञानाभावेऽपि यस्समयकर्ता स एव व्यवहर्तेति निर्णय आवश्यक एवेति भावः। विशदयति—

हि वृद्धिशब्देनापाणिने व्यवहारत आदैच प्रतीयेरन्। पाणि-कृतिमननुमन्यमानस्य वा। तथा मकारेणापिङ्गलस्य न सर्वगुरुस्त्रिक प्रतीयेत। पिङ्गलकृतिमननुमन्यमानस्य वा। तेन कर्तृ-व्यवहर्तारौ सप्रतिपद्येते। तेन वेदे व्यवहरद्भिरवश्यं स्मरणीय-संसबन्धस्य कर्ता स्यात्। व्यवहारस्य च। न हि विस्मृते "वृद्धिरादैच्" इतिसूत्रस्य कर्तरि "वृद्धिर्यस्या चामादिः" "इति किंचित्प्रतीयेत। [तथा न खलु विस्मृते "धीश्रीस्त्रीम्" इति सूत्रस्य कर्तरि "विद्युन्मालामौगौ" इत्यादिना किंचि-त्प्रतीयेत॥]

तस्मात्कारणादवगच्छामः—न कृत्वा सबन्ध व्यवहा-रार्थं वेदा· प्रणीता इति॥

यद्यपिच विस्मरणमुपपद्येत। तथापि न प्रमाणामन्तरेण संबन्धार प्रतिपद्येमहि। यथा विद्यमानस्याप्यनुपलम्भनं भवतीति नैतावता विना प्रमाणेन शशविषाणं प्रतिपद्यामहे। तस्माद-पौरुषेयश्शब्दस्यार्थेन संबन्ध इति॥

न हि विस्मृते इति॥ अपौरुषेयत्व निगमयति— तस्मादिति॥ अन-न्यथासिद्धकर्त्रभावरूपहेतोरित्यर्थ॥

अथाभ्युपेत्याप्यस्मरणनियम योग्यानुपलब्ध्या पुरुषाभाव साध-यति—यद्यपीत्यादिना॥

अत्र "नन्वर्थापत्त्या सबन्धारम्" इत्यारभ्य "तस्मात्सबन्धुर-भाव" इत्यन्त भाष्य वार्तिककृता तात्पर्यतोऽपि न व्याख्यातम्। अस्मिन् भागे प्रतिपाद्यमानोऽर्थापत्तिनिरास अव्यतिरेकसूत्रभाष्ये "अस्तिचेद्व्यवहारसिद्धि न नियोगतस्सबन्धा भवितव्यमित्यर्थापत्तिरपि नास्ति" इति वाक्येन गतार्थ.। अतोऽधिकमिव भाति। तथापि

नन्वार्थापत्त्या संबन्धारं प्रतिपद्येमहि। न ह्यकृतसंबन्धाच्छब्दादर्थं प्रतिपद्यमानान् उपलभामहे। प्रतिपद्येरंश्चेत् प्रथमश्रवणेऽपि प्रतिपद्येरन्। तदनुपलम्भनादवश्यं भविनव्यं सबन्धेति चेन्न—सिद्धवदुपदेशात्। यदि सबन्धुरभावान्नियमनो नार्थाः उपलभ्येरन् ततोऽर्थापत्त्या संबन्धारमवगच्छाम। अस्ति त्वन्यः प्रकारः। वृद्धानां स्वार्थेन संव्यवहरमाणाना उपशृण्वन्तो बाला. प्रत्यक्षमर्थं प्रतिपद्यमाना दृश्यन्ते। तेऽपि वृद्धा. यदा बाला आसन् तदान्येभ्यो वृद्धेभ्य, तेऽप्यन्येभ्य इति नास्त्यादिरित्येवं वा भवेत्।

अथवा—न कश्चिदेकोऽपि शब्दस्यार्थेन सबन्ध आसीत् अथ केन चित् संबन्धाः प्रवर्तिता इति। अत्र वृद्धव्यवहारे सति नार्थादापद्येत सबन्धस्य कर्ता। अपिच व्यवहारवादिन प्रत्यक्षमुपदिशन्ति कल्पयन्तीतरे सबन्धारम्। नच प्रत्यक्षे प्रत्यर्थिनि कल्पना साध्वी। तस्मात्संबन्धुरभाव. ॥

व्याख्यास्याम — सबन्धुर्योग्यानुपलब्धि. प्रागुक्ता नास्तीत्याशङ्कते—नन्वर्थापत्त्येति ॥ अन्यथाऽनुपपन्नमर्थप्रतीतीतिलक्षण कल्पकमाह—न ह्यकृतेति ॥ अन्यथोपपत्तिप्रयोजक अनादिव्यवहारमभिसधाय समाधत्ते—न सिद्धवदिति ॥ सिद्धवत् नित्यवत् ॥ सिद्धवदिति स्वपदानि विकल्प्य वर्ण्यन्ते—यदीत्यादिना इत्येव वा भवेदिति सिद्धान्तपक्ष। अथवेति पूर्वपक्ष। प्रयोजकान्तर निगमयति—अत्रेति ॥ जगदादिवादापेक्षया जगदनादिवादस्य प्राबल्यमाह—अपिचेति ॥

ननु सृष्टिप्रलयप्रवाह श्रुतिस्मृत्यादिसर्वागमसिद्ध सर्वलोकप्रसिद्धश्च कथमपलप्यत इति चेत्, सत्यम्—सर्वागमाना तात्पर्यमिदमुच्यते—यद्दैवप्रभावविज्ञान तदर्थोऽस्य सर्व सृष्टिप्रलयवादः। यथा

**अव्यतिरेकश्च ॥ ७ ॥**

**यथाऽस्मिन् देशे सास्नादिमति गोशब्दः । एवं सर्वेषु दुर्गमेष्वपि । बहवस्संबन्धार कथं संगस्यन्ते । एको न शक्नुयात् । अतो नास्ति सबन्धस्य कर्ता । अपर आह—अव्यतिरेकश्च ॥ न हि संबन्धव्यतिरिक्त· कश्चित्कालोऽस्ति । यस्मिन् न कश्चि-**

समस्तपुरुषकाराभावेऽपि सृष्टिकाले दैववशेन सर्वं प्रवर्तते । प्रलयकाले च सत्यपि पुरुषकारे दैवोपरमादेवोपरमते । तस्माद्दैवलक्षणधर्मानुष्ठानाय यतितव्यमित्येतत्पर स्मृष्टिप्रलयशास्त्र सर्वमिति सिद्धान्त । उक्त च—

इदानीमिव सर्वत्र दृष्टान्ताधिकामिष्यते ।

उपलब्ध्यनुसारेण व्यवस्थासिद्धिरीदृशी ॥ इति ॥

इद च सूत्र वृत्तिकारेण द्विधा व्याख्यातम् । देशाव्यतिरेक· कालाव्यतिरेकश्चेति । तत्राद्यमनुवदति—यथा अस्मिन्निति ॥ शब्दार्थयो· देशत· व्यभिचारो नास्तीति भाव । सचाव्यभिचार एकस्य सबन्धकर्तृत्वे गमनासभवात् न सभवति । बहूना कर्तृत्वे परस्पर सगति सगान विगानाभावो वा न सभवति, बहुत्वस्य विगाननियतत्वादिति भाव· । नियतत्वानभ्युपगमे—द्वितीय पक्षमनुवदति—अपर आहेति ॥ कालतोऽपि व्यभिचारो नास्तीति भाव । तमुपपादयति—कथमित्यादिना॥ केन चिच्छब्दनेति ॥ सर्वेषामप्रसिद्धत्वे अस्य शब्दस्यायमर्थ इति सकेतव्यवहार एव न सभवतीत्यर्थ । अभ्युपगन्तव्या इति ॥ यदा शब्दार्थयोरनादिता तदैवानर्थकस्य प्रयोगायोगात् सबन्धानादिताऽपि सिद्धैवेति भाव । अस्ति चेदिति ॥ अनादिव्यवहारासिद्धिरस्तिचेत् इत्यर्थ । अर्थापत्त्यनुपपत्तिस्तु प्रागेव प्रमाञ्चिता इति ॥

अप्रसिद्धार्थैः पदै सबन्धकरणाय वाक्यरचना सबन्धकर्तुर्न सभवतीति चेत्, अप्रसिद्धसबन्धा बालाः कथ व्यवहारात्सबन्ध गृह्णियु-

दपि शब्दः केनचिदर्थेन संबद्ध आसीत्। कथम्—संबन्ध-क्रियैव हि नोपपद्यते। अवश्यमनेन संबन्धं कुर्वता केन चित् शब्देन कर्तव्य। येन क्रियेत तस्य केन कृत। अथान्येन केनचित् शब्देन कृत, तस्य केनेति तस्य केनेति नैवावतिष्ठते। तस्मादवश्यमनेन संबन्धं कुर्वता अकृतसंबन्धाः केचन शब्दाः वृद्धव्यवहारसिद्धा अभ्युपगन्तव्याः। अस्ति चेत् व्यवहार सिद्धिः न नियोगतः संबन्धा भवितव्यमिति अर्थापत्तिरपि नास्ति॥

स्यादेतत्—अप्रसिद्धसंबन्धा बाला कथं वृद्धेभ्य प्रति-पद्यन्ते इति। नास्ति दृष्टे अनुपपन्न नाम। दृष्टा हि बाला वृद्धेभ्य प्रतिपद्यमाना। न च प्रतिपन्नसंबन्धाः संबन्ध कर्तु। तस्माद्वैषम्यम्॥

अर्थेऽनुपलब्धे॥ ८॥

अनुपलब्धे च देवदत्तादावर्थे अनर्थकं सञ्ज्ञाकरणं अशक्यं च, विशेषान् प्रतिपत्तु हि सञ्ज्ञा क्रियन्ते विशेषाश्चोद्दिश्य।

रित्याशङ्कते—स्यादेतदिति॥ व्यवहर्तुस्संबन्धज्ञानसत्त्वात् संबन्धाख्या-नाय वाक्यरचना संभवत्येव। यदि पर प्रतिपत्तॄणां अप्रसिद्धसमस्त-शब्दार्थाना न कथंचन वाक्यात् अर्थप्रतीतिस्संभवतीत्युच्येत, तच्च दृष्टविरुद्ध अङ्गुलिनिर्देशादिचेष्टाभाषान्तरप्रभृत्यनेकोपायाना दर्शनादि-त्यभिप्रेत्य समाधत्ते—नास्तीति॥ नचप्रतीति॥ संबन्धस्य कर्तु समय-कर्तुः प्रतिपन्नसंबन्धाः अन्ये शब्दा न सन्ति। अतो वैषम्यात् न प्रतिबन्दीति भावः॥

युक्त्यन्तरेण सञ्ज्ञाकरण प्रतिषेधत्सूत्र व्याचष्टे—अर्थ इति॥ अनर्थक अशक्य सञ्ज्ञाकरण इति पदत्रयमुपतिष्ठते। देवदत्ता-

तद्विशेषेष्वज्ञायमानेषूभयमप्यनवक्लृप्तम् । तस्मादपौरुषेयः शब्द-स्यार्थेन सबन्ध ॥ अतश्च—

तत्प्रमाण बादरायणस्यनपेक्षत्वात् ॥ ९ ॥

नचैवं सति पुरुषान्तरं प्रत्ययान्तर चापेक्ष्यते । तस्माच्चोद-नालक्षण एव धर्मो नान्यलक्षण । बादरायणग्रहणमुक्तम् ॥

चित्राक्षेपपरिहार

अथ यदुक्त-अनिमित्तं शब्दः कर्मकाले फलादर्शनात् काला-न्तरे च कर्माभावात्प्रमाणं नास्तीति । तदुच्यते-न स्यात्प्रमाणं यदि पश्चैव प्रमाणान्यभविष्यन् । येन येन हि प्रमीयते तत्तत्प्रमाण, यथोपलब्धिर्हि प्रतिपत्तु फल, कर्तु निमित्तम् । उपलब्धेरेवाभावे उभय नसिद्ध्यतीत्याह–अनुपलब्धे चेति ॥ प्रकृते धर्मादिरूपार्थस्यात्य-न्तानुपलम्भात् न तरा सज्ञाकरण सभवतीत्यर्थ । तस्मात् निरुक्ताशक्य-त्वाफलत्वरूपहेतुद्वयात् तत्प्रमाणमिति सूत्र स्वव्याख्याने व्याख्यातम् ॥

एव सति केन पुन. प्रमाणेन व्यवहारे सबन्धग्रहणमितिचेत् इत्थम्–शब्द वृद्ध अभिधेय च प्रत्यक्षेण पश्यति । प्रयोज्यवृद्धस्य प्रतिपन्नत्व चेष्टयाऽनुमिनोति । पदपदार्थाश्रित शक्तिलक्षण सबन्धमर्था-पत्त्या कल्पयति । अतस्सबन्ध. त्रिप्रमाणक । तत्रार्थापत्तिस्साक्षात् । इतरत् द्वय द्वारमिति सिद्धान्त ॥

पूर्वमनिमित्तसूत्रे चित्रादिचोदना मृषा प्रत्यक्षासवादरूपप्रत्यक्षा-नुपलब्धिविरुद्धत्वात् सप्रतिपन्नवाक्यवदिति अनुमानमुक्त, भाष्यकृता तु चित्रा न पशुफला स्वकाले फलादर्शनात्, व्यतिरेकेण यद्यस्य साधन तत् स्वकाल एव तत्साधयति यथा सुखसाधन मर्दनमिति तदेव विश-दीकृतम् । तदेतदनूद्य प्रत्यक्षासवादस्याप्रयोजकत्व स्वकाले फलादर्शन-स्यासिद्धिं चाह —अथ यदुक्तमिति ॥ नच—प्रमाणेनेति ॥ चोदनार्थे

**शब्देनापि प्रमीयते ततश्शब्दोऽपि प्रमाणम् । यथैव प्रत्यक्षम् । नच प्रमाणेनावगतं प्रमाणान्तरेणानवगतमित्येतावताऽनवगतं भवति । नचैव श्रूयते कृते कर्मणि तावत्तैव फलं भवतीति । किंतु कर्मणः फलं प्राप्यत इति ।। यच्च कालान्तरे फलस्यान्यत्प्रत्यक्षं कारणमस्तीति । नैष दोषः, तच्चैव हि तत्र कारणं शब्दश्चेति ॥**

प्रत्यक्षस्यानधिकार इति भावः । तावत्तैवेति ॥ अनन्तरमेवेत्यर्थः ॥ किंत्विति ॥ अविशेषितकालविषयिणी चोदनेत्यर्थः । आनन्तर्यविषयः प्रत्यक्षाभासवाद । अविशेषितकालविषयिणी चोदना इति विषयभेदान्न विरोध इति भावः ॥

चित्रादिकारणस्य सेवाप्रतिग्रहादिनाऽन्यथासिद्धिमनूद्य निरस्यति—यच्चेति ॥ प्रत्यक्षं प्रत्यक्षसिद्धं सेवादिकमित्यर्थः । तच्चैवेति ॥ लोकसिद्धं सेवादिकम्, शब्दश्च—शब्दबोध्यं चित्रादिकम् । अदृष्टं दृष्टोपसंहारेणैव कार्यं करोतीति सिद्धान्तात् ॥

अयमत्रसारः—चित्रादेः फलं पश्चादीह वाऽमुष्मिन्नेव वा भवतीत्यनियमः । कारीर्यादेः फलं वृष्ट्यादीहैवेति नियमः । क्वचिददर्शनं तु दृष्टसामग्र्यभावेन वा प्रबलकर्मान्तरादिप्रतिबन्धेन वा उपपद्यते । ज्योतिष्टोमादेः फलं स्वर्गादिकं त्वमुष्मिन्नेवेति नियम इति ॥

एवंस्थितेऽपि सिद्धान्ते भर्तृमित्रा आक्षपादीयाश्च चित्रादेः फलमिहैवेति कथयन्ति । अदर्शनं तु कर्तृकर्मसाधनवैगुण्यनिबन्धनमित्यवयन्ति । तेषां मते इहाकृतचित्रादिकर्मणां पशुफलं निर्निमित्तं स्वाभाविकमापद्येत । प्राकृतचित्रादीनां प्रागेव क्षणित्वात् । स्वर्गादिफलकर्मणश्शेषांशस्य पश्चादिफलकल्पना न युक्तिमती । न ह्यन्यत्फल

आत्मवाद

यत्तु प्रत्यक्षविरुद्धं वचनमुपन्यस्त—स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं याति" इति प्रत्यक्षं शरीरकं व्यपादिशतीति।' तदुच्यते—शरीरसबन्धात् यस्य तच्छरीरं सोऽपि तैर्यज्ञायुधैः यज्ञायुधीत्युच्यते ॥

कर्मान्यत्साधयति । तथाच कार्यमात्रस्यादृष्टाधीनत्वापायात् वैदिक. पन्था विलीयेत ॥

यत्तु—"स्वधर्मनिष्ठा' प्रेत्यकर्मफलमनुभूय ततश्शेषेण विशिष्ट जात्यादिमन्तो जन्म प्रतिपद्यन्ते" इत्यादिक गौतमीयादिवचन, तत्रापि शेषशब्द चित्रादिपर इत्येवावगन्तव्यम् । कथ तर्हीहाकृतकारीरिकर्मणा वृष्टिसिद्धि ? यत्त्वन्नादिफल जन्मान्तरानुष्ठित तत् स्वफलोत्पादनाय शरीरमिव वृष्ट्यादिकमारभत इति ॥

अथ देहातिरिक्तमात्मान निरूपयितुं प्रस्तौति—यत्त्विति ॥ नह्यसति देहव्यतिरिक्तात्मनि परलोकफलाश्चोदना उपपद्येरन् । तदिदमात्मास्तित्वमस्मिन् शास्त्रे प्रारम्भ एवावश्यवक्तव्यमपि उत्तरे तन्त्रे सूत्रकृता तृतीयाध्यायतृतीयपादे "नैक आत्मनश्शरीरे भावात्" इत्यत्र उक्तमिति वृत्तिकृता भगवतोपवर्षेण व्याख्यातम् । अत्रात्मा स्तित्वा भिधानप्रसक्तौ शारीरके वक्ष्याम इति उद्धार (अपकर्षनिवृत्ति) कृतः शबरस्वामिना तु अत एवाकृष्यात्रात्मास्तित्व निरूप्यते । अयमश' श्रीशाङ्करभाष्ये निरुक्तसूत्रे भाषित' ।

यज्ञायुधसप्रयुक्तशरीरसंबन्धात् यज्ञायुधिपदेन लक्षणयाऽऽत्मोच्यत इति समाधत्ते—तदुच्यत इति ॥ शरीरादीनामात्मत्वे तेषामनित्यत्वेन कृतनाशाकृताभ्यागमप्रसग. । तदर्थस्तु कृते कर्मणि कर्तुर्नाश । अकृतेऽपि कर्मणि भोक्तुरागम इति । तथाच पुण्यपापव्यवस्थानुपपत्ति-

आह—कोऽसावन्य[1] नैनमुपलभामहे । प्राणादिभिरेनमुपलभामहे । योऽसौ प्राणिति अपानिति उच्छ्वसिति निमिषतीत्यादि चेष्टितवान् सोऽत्र शरीरे यज्ञायुधीति ॥

ननु शरीरमेव प्राणिति अपानिति च । न—प्राणादयस्तु रिति भाव । तदर्थं नित्य पुमान् प्रतिपादयितव्य , स च भोक्तृत्वसिद्ध्यर्थं चेतन । देहान्तरप्राप्तये च विभु । सुखदु खव्यवस्थातश्च नाना । अयमेव तस्य शरीरेण सबन्ध , यद्भोगायतनत्वेन आत्मसात्करणम् । सोऽप्यात्मा प्रत्यभिज्ञालक्षणप्रत्यक्षसिद्ध । प्रत्यभिज्ञा च अन्येद्यु दृष्टमपरेद्यु इदमहमदर्शमित्यहप्रत्यय । तस्य च द्रव्य सत्त्वादिरूपस्य ज्ञानसुखदु खादिलक्षणः परिणाम अभ्युपगम्यते । तावता कुण्डलादिषु सुवर्णस्येव धर्मिणो नित्यत्वान्न नाश । ततश्च कर्तृत्वभोक्तृत्वाद्युपपत्ति । न हि खलु वैशेषिकाणामिव परिस्पन्द एक एव क्रियेति सिद्धान्त । किंतु परिणामलक्षण सूक्ष्मो व्यापारोऽपि क्रियाऽस्तीति ॥

अत इदमप्यपास्तम्—यत् विभोस्तावत् सयुज्यमानवियुज्यमानदेशासभवेन स्पन्दितुमप्यसामर्थ्यात् न कर्तृत्व ननरा नित्यस्या प्रच्युतप्राच्यरूपस्य सुखदु खादिरूपो विकार न तमा भोक्तृत्वमिति ॥

तत्र प्रथम देहात्मवादनिरासाय वैशेषिकादिसम्मता हेतव उपन्यस्य निरस्यन्ते । तथा निरासानादरे तेषु हेतुषु स्वसमत अहप्रत्यये च शिष्यास्सामान्यदृष्टयो भवेयुरिति ॥

तत्र प्राणापानोच्छ्वासानिमेषादयो व्यापारा न शरीरधर्मा शरीरधर्मवैधर्म्यात् व्यतिरेकेण रूपादिवत् इत्यभिप्रायेणाह—आह कोऽसाविति ॥ वैधर्म्यं चायावद्द्रव्यभावित्वम् । तदपि शरीरे स्थितेऽपि अपगतिलक्षणमित्याह—प्राणादयस्त्विति ॥ वायोरूर्ध्वाधोगतिविशेष.

शरीरगुणविधर्माणः, अयावच्छरीरभावित्वात् । यावच्छरीरं तावदस्य गुणा रूपादयः। प्राणादयस्तु सत्यपि शरीरे न भवन्ति। सुखादयश्च स्वयमुपलभ्यन्ते न रूपादय इव शरीरगुणाः परेणापीति। तस्माच्छरीरगुणवैधर्म्यादन्य शरीरात् यज्ञायुधीति॥

आह—कुत एष सम्प्रत्ययः? सुखादिभ्योऽन्य तद्वानस्तीति। न हि सुखादिप्रत्याख्यानेन तस्य स्वरूपमुपलभामहे,

प्राणापानाभ्यामुच्यते। तिर्यग्गमनशीलस्य वायो नाकस्मादूर्ध्वाधोगतिस्सम्भवतीति तद्धेतु प्रयत्नोऽनुमीयते। प्रयत्नश्च गुणत्वात् गुणिनमनुमापयति, स आत्मेति भाव ॥

एव सुखादयः न शरीरगुणा तद्गुणवैधर्म्यात् व्यतिरेकेण रूपादिवत् इत्यभिप्रेत्याह--सुखादयश्चेति ॥ अत्रापि वैधर्म्य परानुपलभ्यत्वमित्याह--न रूपादय इवेति ॥ तथाच सुखादयः किंचिद्द्रव्याश्रिता गुणत्वात् रसादिवदित्यतिरिक्तद्रव्यरूपात्मसिद्धिरित्यभिप्राय ॥

तदुपरि विज्ञानात्मवादी सौगत प्रत्यवतिष्ठते--आह कुत एष इति ॥ सम्प्रत्यय उभयवादिसिद्धोऽनुभव इत्यर्थ । अय भाव — ज्ञानविशेषा हि सुखादय, ज्ञान च स्वतन्त्र वस्तु न कस्यचिद्गुणः, अतो नान्यस्तद्वानिति। यदाहु —

न गुणव्यतिरिक्तश्च गुणी नामास्ति कश्चन ।
गुणत्वमप्यस्य नास्ति यतोऽधिष्ठानकल्पना ॥
न सुखादिप्रमेय वा मनो वाऽस्तीन्द्रियान्तरम् ।
अनिषेधादुपात्त चेदन्येन्द्रियमत वृथा ॥

इति॥ अथोच्यते तेन विनेति ॥ स्वतन्त्रस्यापि सबन्धिकल्पनेऽनवस्थेत्यर्थ ॥

अथ ज्ञान नाम क्रिया, गच्छतीत्यादिवत् ज्ञानातीति

तस्मात् शशविषाणवदसौ नास्तीति । अथोच्यते—तेन विना कस्य सुखादय इति । न कस्यचिदपीति वक्ष्याम । न हि यो य उपलभ्यते तस्य तस्य संबन्धिना भवितव्यम् । यस्य संबन्धोऽप्युपलभ्यते सबन्धी च, तस्यायं संबन्धीति गम्यते । न हि चन्द्रमसं आदित्यं वोपलभ्य सबन्धान्वेषणा भवति कस्यायमिति । न कस्याचिदपीत्यवधार्यते । तस्मान्न सुखादिभ्योऽन्यः तद्वानस्तीति । अथोपलब्धस्यावश्यं कल्पयितव्यस्संबन्धी भवति, तत आत्मानमपि अनेन प्रकारेणोपलभ्य कस्यायमिति संबन्ध्यन्तरमन्विष्येम । तमपि कल्पयित्वा अन्यमपि कल्पयित्वा अन्यमित्यव्यवस्थैव स्यात् । अथ कांचित्कल्पयित्वा न संबन्ध्यन्तरमपि कल्पयिष्यसि तावत्येव विरस्यसि तावता च परितुष्यसि ततो विज्ञान एव परितुष्य तावत्येव विरन्तुमर्हसि ॥

अत्रोच्यते-यदि विज्ञानादन्यो नास्ति कस्तर्हि जानातीत्युच्यते, ज्ञानस्य कर्तुरभिधानमनेन शब्देनोपपद्यते. तदेष शब्दोऽर्थवान् कर्तव्य इति ज्ञानाद्व्यतिरिक्तमात्मानं कल्पयिष्याम इति ॥ आ.—देवा एनं शब्दमर्थवन्त कल्पयिष्यन्ति यदिकल्पयितव्यं प्रमंस्यन्ते । बहव खल्विह जना अस्त्यात्मा अस्त्यालोके वेदेच प्रयुज्यते, क्रिया च सबन्धिन्येवेति शङ्कते - अत्रोच्यते-यदीति ॥ विज्ञानादिव्यतिरिक्त अन्याऽस्तीति साक्षाद्वक्तारोऽपीह लोके जनाः नात्मान साधयितु प्रभवन्ति किंपुन· पारपरिक जानातीति शब्द इति परिहसति सौगत.—आ. देवा इति ॥ आ· इति भावसूचकमव्ययम् । प्रमस्यन्ते प्रमन्तु शक्ष्यन्ति यदीत्यर्थ । देवशब्दप्रयोग शब्दरूपाणा देवानामचेतनत्वात् अशक्यातिशयभिप्रायेण ॥

त्मेति आत्मसत्तावादिन एव शब्दस्य प्रत्यक्षवक्तारो भवन्ति। तथापि नात्मसत्तां कल्पयितु घटन्ते। किं पुनः जानातीति परोक्षश्शब्दः। तस्मादसदेतत् ॥

उच्यते—इच्छया आत्मानमुपलभामहे। कथमिति? उपलब्धपूर्वे हि अभिप्रेते भवतीच्छा। यथा—मेरुमुत्तरेण यान्य स्मज्जातीयैरनुपलब्धपूर्वाणि स्वादूनि वृक्षफलानि न तानि प्रति अस्माकमिच्छा भवति। नो खल्वन्येन पुरुषेणोपलब्धेऽपि विषयेऽन्यस्य उपलब्धुरिच्छा भवति। भवति चान्येद्युरुपलब्धे अन्येद्युरिच्छा। तेनोपलम्भेन समाजकर्तृका सेत्यवगच्छाम। यदि विज्ञानमात्रमेवेद उपलम्भकमभविष्यत्, प्रत्यस्ते तस्मिन् कस्यापरेद्युरिच्छाऽभविष्यत्। अथ तु विज्ञानादन्यो विज्ञाता नित्य तत एकस्मिन्नहनि य एवोपलब्धा परेद्युरपि स एवैषिष्यतीति। इतरथा ह्यिच्छा नोपपन्ना स्यात् ॥

एवं सुखादिषु हेतुषु निरस्तेषु इच्छयाऽऽत्मसाधन सिद्धान्त्यनुवदति—उच्यते इच्छयेति ॥ अन्यस्योपलब्धुरिति ॥ उपलब्धुरिति पञ्चम्यन्तमन्यस्येत्यस्य प्रतियोगिसमर्पकम्। तेनोपलम्भेनेति ॥ इच्छा उपलम्भसमानकर्तृका उपलम्भाविषयाविषयकत्वात् सम्प्रतिपन्नैक्यक्रियावादिति युक्तिरत्राभिमता। ततश्च स कर्ता न विज्ञानमात्र नापि क्षणिकमिति। तस्य स्थिरत्व विशदयति—यदि—विज्ञानमात्रमिति ॥

अत्रापि सौगत. प्रतिवक्ति—अत्रोच्यते—अनुपपन्नामिति न केति॥ विज्ञानादन्यो नित्यो विज्ञाता यदा प्रमाणान्तरानवगत तदा ज्ञानेच्छयो. समानकर्तृकत्व कर्तु स्थिरत्व च नोभयवादिसम्प्रतिपन्न, ततश्चाप्रयोजकमनुमानमिति भाव.। एतदेव विशदयति—विज्ञानात्तावदन्यमिति ॥ प्रत्यक्षावगतत्वादिति ॥ अनुपपत्ति प्रत्यक्षबाधितेति भाव ।

अत्रोच्यते—अनुपपन्नमिति नः क्व सम्प्रत्ययः। यत् न प्रमाणेनावगतम्। विज्ञानाद्यावदन्यं नोपलभामहे। यन्नोपलभामहे तत् शशविषाणवदेव नास्तीत्यवगच्छामः। नच तस्मिन्नसति विज्ञानसद्भावोऽनुपपन्नः। प्रत्यक्षावगतत्वादेव। क्षणिकत्वं चास्य प्रत्यक्षपूर्वकमेव। नच ज्ञातरि विज्ञानादन्यस्मिन् असति ज्ञाने चानित्ये अपरेद्युरिच्छा अनुपपन्ना, प्रत्यक्षावगतत्वादेव। नो खल्वेतत् दृष्टं, य एवान्येद्युरुपलब्धा स एवान्येद्युरेषितेति। इदं तु दृष्टं यत् क्वचिदन्येन दृष्टं अन्य इच्छति क्वचिन्न—समानायां सन्ततावन्य इच्छति सन्तत्यन्तरे नेच्छतीति। तस्मात् न सुखादिव्यतिरिक्तोऽन्योऽस्तीति॥

अत्रोच्यते—न हि अस्मर्तारं इच्छन्तीत्युपपद्यते। न वा अदृष्टपूर्वे स्मृतिर्भवति। तस्मात् क्षणिकविज्ञानस्कन्धमात्रे स्मृतिरनुपपन्नेति॥

एवमनतिरेकेऽनुपपत्तिं परिहृत्य क्षणिकत्वेऽनुपपत्तिमपि परिहरति—क्षणिकत्वंचेति॥ प्रत्यक्षपूर्वकमिति॥ प्रत्यक्षेण तत्कालसत्त्वमात्रग्रहणात् पूर्वोत्तरकालसत्त्वाग्रहणाच्चेति भावः। अतिप्रसंगं सन्तत्यैक्येन परिहरति-इदं तु दृष्टमिति॥

एवमिच्छाया लिङ्गत्वे निराकृते स्मृतेर्लिङ्गत्वमनुवदति सिद्धान्ती—अत्रोच्यते नहीति॥ स्मृतिरिच्छासमानाधिकरणा इच्छाजनकत्वात् यत्रेच्छाऽभावः तत्र स्मृत्यभावः। तथा स्मृतिः दर्शनसमानाधिकरणा दर्शनजन्यत्वात् यत्र दर्शनाभावः तत्र स्मृत्यभाव इति प्रयोगावत्राभिमतौ। विज्ञानस्कन्धमात्र इति॥ विज्ञानप्रवाहातिरिक्तस्थिरात्मानङ्गीकारे स्मृत्यनुपपत्तिरित्यर्थः। स्कन्धो नाम प्रवाहः॥

स्कन्धघने अन्येन स्कन्धघनेन यत् ज्ञात तत्सन्ततिजेनान्येनोपलभ्यते नातत्सन्ततिजेनान्येन । तस्मात् शून्याः स्कन्धघना इति ॥

अथास्मिन्नर्थे ब्राह्मण भवति "विज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यति न प्रेत्यसंज्ञाऽस्ति" इति॥

उच्यते—नैतदेवम् । अन्येद्युः दृष्टे अपरेद्यु अहमिदमदर्शमिति भवति प्रत्यय । प्रत्यगात्मानि चैतद्भविष्यति ।

स्कन्धघनशब्देन विज्ञानस्कन्धोऽत्र विवक्षित. । स्कन्धश्चासौ घनश्चेति विग्रह । घनशब्द जात्यन्तरसाकर्यप्रतिषेधार्थ. । यथा सुवर्णघनः अयोघन इति । नान्यत् जात्यन्तरमन्तराले विद्यत इत्यर्थः । तस्मादिति ॥ अतिरिक्तात्माभावेऽपि स्मृत्युपपत्तेरित्यर्थ । शून्या. विषयाश्रयशून्या-निरन्वयोत्पत्तिविनाशिन्यश्च विज्ञानव्यक्तय इत्यर्थ ॥

वेदवादिनो विरोध वक्तु शातपथीयबृहदारण्यक(६–४–२२) काण्डवाक्यमुपन्यस्यति—अथास्मिन्नर्थ इति ॥ निरन्वयोत्पत्ति विनाशसिद्धान्त इत्यर्थ ॥ विज्ञानघन इति ॥ विज्ञान च तत् घनश्चेति विज्ञानघन विज्ञानस्कन्धः एतेभ्यो भूतेभ्य· पृथिव्यादिभ्य समुत्थाय मनुष्यादिभावेन जनित्वा सघातीभूय तेषु विनश्यत्सु स्वयमपि विनश्यति । न प्रेत्य सज्ञाऽस्ति विनाशानन्तर नामापि नावशिष्यते इति श्रुत्यर्थ. ॥

एव परोक्तेषु हेतुषु निरस्तेषु प्रत्यभिज्ञालक्षणेनाहप्रत्ययेन आत्मानं साधयति—उच्यते नैतदेवमिति ॥ विज्ञानातिरिक्तात्मसत्त्वेऽय प्रत्यय उपपद्यते, नान्यथेत्याह—प्रत्यगात्मनीति ॥ स्वस्मै स्वय भासमानत्व प्रत्यक्त्वम् । अहमिति तस्याभिलापकश्शब्दः ॥

न परत्र। अपरो ह्यसौ अन्येद्युः दृष्टवान्। तस्मात्तद्व्यतिरिक्तोऽन्योऽस्ति। यत्रायमहंशब्दः॥

आह—परत्राप्यहंशब्दो भक्त्या दृश्यते। यथा—अहमेव पुत्रः। अहमेव देवदत्तः। अहमेव गच्छामीति। अत्रोच्यते—न वयमहमितीमं शब्दं प्रयुज्यमानमन्यस्मिन्नर्थे हेतुत्वेन व्यपदिशामः। किं तर्हि? शब्दात् व्यतिरिक्तं प्रत्ययम्। प्रतीमो वयं—इममर्थं वयमेवान्येद्युरुपलभामहे वयमेवाद्य स्मराम। तस्मात् वयमिममर्थमवगच्छामः—वयमेव ह्य' वयमेवाद्य इति। ये ह्यः अद्य च, न ते विनष्टाः॥

अथाप्यस्मिन्नर्थे ब्राह्मणं भवति—"स वा अयमात्मा" इति प्रकृत्य आमनन्ति—"अशीर्यो न हि शीर्यते" इति।

अहंप्रत्ययगोचरत्व अतिरेकसाधनायोक्त अनेकान्तमित्याशङ्कते—आहपरत्रेति॥ अहं गच्छामीति॥ अत्र देहपर इति भाव। नास्माभिरनुमानमुच्यते, किंतु अहंशब्दवेद्यस्य प्रत्यभिज्ञाप्रत्ययात् विज्ञानातिरेकमध्यक्षयाम इति समाधत्ते—अत्रोच्यते न वयमिति॥ अयमाशय—यद्यर्थान्तरविषयया स्मृत्या विज्ञातार कल्पयेम, तदा वासनावशादेवोपपन्ना सा स्मृति. नैव शक्नोति पूर्वापरकालस्थायिनं विज्ञातारमुपस्थापयितुमित्युच्येत, ज्ञातृप्रत्यभिज्ञा त्वियमुच्यते वयमेव ह्यो वयमेवाद्य इति। तेन ज्ञातृत्वप्रकारकेण प्रत्यभिज्ञाप्रत्ययेन प्रत्यक्षेण ज्ञानादन्यस्य स्थिरस्य ज्ञातुस्सिद्धिरिति। तदेवाह—ये ह्योऽद्य चेति॥

अत्र वेदविरोधं मन्यमानं शिष्यं प्रतिबोधयितुं ब्राह्मणमुदाहरति—अस्मिन्नर्थे इति॥ (६–४–२२)

एष पाठः—स एष नेतिनेत्यात्माऽगृह्यो न हि गृह्यते अशीर्यो

तथा—"अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मा" इति ॥ विनश्वरं च विज्ञानम् । तस्माद्विनश्वरादन्यं स इत्यव-गच्छामः । न च शक्यमेवमवगन्तुम्—यथोपलभ्यन्ते अर्थाः न तथा भवन्तीति । यथा तु खलु नोपलभ्यन्ते तथा भवन्तीति । तथाहि सति शशो नास्ति शशस्य विषाणमस्तीत्यवगम्येत । नचायं प्रत्ययो व्यामोह इति शक्यते वक्तुम् । बाधकप्रत्यया-भावात् । तस्मात्सुखादिभ्य व्यतिरिक्तोऽस्ति । एवं चेत् स एव यज्ञायुधीति व्यपदिश्यते ॥

आह—यदि विज्ञानादन्यदस्ति विज्ञातृ विज्ञानमपास्य

न हि शीर्यते असंगो न हि सज्यते असितो न व्यथते न रिष्यति" इति । अगृह्य परकीयकरणगोचरयोग्यतारहित, अत परकीयेन्द्रिय-गोचरो न भवतीत्यर्थ । यन्मूर्तं सहत च तच्छीर्यते विशीर्णं भवति । अय तु विपरीत । अमूर्तत्वादेव च असग मृज्जलादिवत् मिथस्सगर-हित । न व्यथते बाधनयोग्यतारहित्यादेव न शोचतीत्यर्थ । तस्मा-न्नरिष्यति न हिंस्यते न विनश्यतीति यावत् । अविनाशीति । विनष्टु शीलमस्य नास्तीत्यविनाशी । ततश्च अनुच्छित्तिधर्मा । उच्छित्तिः विनाश स च धर्मो यस्य न भवतीत्यनुच्छित्तिधर्मा इति मैत्रेयीं प्रति याज्ञवल्क्य उपादिक्षदित्यर्थः । मानाधीना मेयासिद्धिमुपसहरति— न च शक्यमिति ॥ तस्मात् अबाधितप्रमाणसत्त्वात् । प्रत्यक्षाविसवाद-मुद्धरति—एवं चेदिति ॥

"तस्माच्छशविषाणवदसौ नास्ति ॥ इत्यात्मनो यदनुपलब्धि-निरस्तत्वमुक्त तदुपन्यस्य निरस्यति—आह यदि विज्ञानादिति ॥ निदर्शनायोगादनुपलब्धिरिति भाव. ॥

तन्निदर्श्यतां—इदं तदीदृशं चेति । न च तन्निदर्श्यते । तस्मान्न ततोऽन्यदस्तीति ॥ अत्रोच्यते—स्वसंवेद्यस्स भवति नासावन्येन शक्यते द्रष्टुम्, कथमसौ निदर्श्येतेति । यथा च काश्चित् चक्षुष्मान् स्वयं रूपं पश्यति । न च शक्नोत्यन्यस्मै जात्यन्धाय तन्निदर्शयितुम् । न च तन्न शक्यते निदर्शयितुमित्येतावता नास्तीत्यवगम्यते । एवमसौ पुरुषः स्वयमात्मानमुपलभते न चान्यस्मै शक्नोति दर्शयितुं, अन्यस्य द्रष्टुः तं पुरुषं प्रति दर्शनशक्त्यभावात् । सोऽप्यन्यः पुरुषः स्वयमात्मानमुपलभते । न च परमात्मानम् । तेन सर्वे स्वेनस्वेनात्मना आत्मानमुपलभमानाः सन्त्येव । यद्यपि परपुरुषं नोपलभन्त इति ॥

अथास्मिन्नर्थे ब्राह्मणं भवति—"शान्तायां वाचि किं ज्योतिरेवायं पुरुषः । आत्मज्योतिस्सम्राडिति होवाच" इति ॥ परेण नोपलभ्यत इत्यत्रापि ब्राह्मणं भवति—"अगृह्यो न हि गृह्यते" इति ॥ परेण न गृह्यत इत्यभिप्रायमेतत् । कुतः ? स्वय-

यत्तु बाह्यं वस्तु घटादिकं जडं परप्रकाशं तत् दर्शनयोग्यं निदर्शनयोग्यं च भवति । आत्मवस्तु हि स्वस्मादेव स्वयं प्रकाशं, परस्मै तु दर्शनायोग्यमिति न योग्यानुपलब्धिरित्यभिप्रेत्य समाधत्ते—अत्रोच्यते इति ॥

स्वसंवेद्यत्वाद्यर्थे ब्राह्मणान्युदाहरति—अथास्मिन्नर्थे ब्राह्मणमिति ॥ बृहदारण्यकषष्ठाध्याये तृतीयं ज्योतिः ब्राह्मणमित्यर्थः । प्रकाशकेषु आदित्यचन्द्राग्निवागादीन्द्रियेषूपरतेष्वपि आत्मा स्वयं प्रकाशते इति जनकं प्रति याज्ञवल्क्यः उपदिदेशेति भावः ॥

परानुपलम्भं ब्राह्मणेनापि द्रढयति—अगृह्यो न हीति ॥ व्याख्याति—

ज्योतिष्ट्ववचनात् । अथापि ब्राह्मण—"अत्रायं पुरुष स्वयंज्योतिर्भवति" इति ॥ केन पुनरुपायेनायमन्यस्मै कथ्यत इति। तत्राप्युपाये ब्राह्मण भवति—"स एष नेतिनेत्यात्मेति होवाच" इति ॥ असावेवरूप इति न शक्यते निदर्शयितुम् । यच्च पर पश्यति तत्प्रतिषेधस्तस्य उपदेशोपायः । शरीर पर पश्यति तेनात्मोपदिश्यते—शरीर नात्मा, अस्ति शरीरादन्य इति स आत्मेति शरीरप्रतिषेधेन उपदिश्यते । तथा प्राणादयो नात्मानः तत्प्रतिषेधेन तेभ्योऽन्य उपदिश्यते । तथा परस्थास्सुखादयः परेण लिङ्गैरुपलभ्यन्ते । तेऽपि नात्मान इति तत्प्रतिषेधेन अन्य उपदिश्यते । यः स्वयं पश्यति न ततोन्यः पुरुष इत्येतदपि पुरुषप्रवृत्त्याऽनुमीयते । यदाऽसौ पुरुष पूर्वेद्यु सामिकृतानामर्थाना प्रतिसमाधाने शेषानुष्ठाने च यतते अतः प्रवृत्त्यावगम्यते नूनमसावनित्यान् नित्यमवगच्छतीति ॥

परेणेति ॥ अत्रायमिति ॥ स्वप्नावस्थायामित्यर्थ । अग्राह्य इति सामान्यवचन स्वयज्योतिष्ट्ववचनात्परस्मिन् सकुचितमिति भाव । अथोपदेशोपायमपोहलक्षण ब्राह्मणोक्तमाह केन पुनरिति ॥ ६–४–२२ इति होवाचेत्यधिकः माध्यन्दिनपाठ । य स्वय पश्यतीति ॥ अनेनवाक्येन एकस्मिन्नपि देहे आत्मभेद प्रतिक्षिप्यते । अनित्यान्नित्यमिति अनित्यान् पदार्थान् सदेत्यर्थ. ॥ अनया च वचोभग्या जीवाना मप्यन्तरात्मा परमेश्वर प्रतिक्षिप्यते भाष्यकृतेति प्रसिद्धि. स्यात् ॥

उपायान्तरमाह—उपमानाच्चेति ॥ नत्विदमुपमानप्रमाण किंतु सादृश्यविषयकत्वात् उपमानवाचोयुक्तिः ॥

आत्मनोऽनुपलब्धिनिरस्तत्वशङ्कैवासगतेत्याह—यदुच्यते विज्ञान-

उपमानाच्चोपदिश्यते—यादृशं भवान् स्वयमात्मानं पश्यति अनेनोपमानेनावगच्छ अहमपि तादृशमेव पश्यामीति । यथा— कश्चिदात्मीया वेदना परस्मै आचक्षीत दह्यमानस्येव मे भवति । पाट्यमानस्येव मे भवति । रुद्ध्यमानस्येव मे भवति इति । अतः स्वयमवगम्यमानत्वात् अस्ति तद्व्यतिरिक्तः पुरुष इति ॥

यदुच्यते—विज्ञानमपास्य तन्निदर्श्यतामिति । यदुपायमेव निषेधसि न शक्यमुपायमन्तरेणोपेयमुपेतुम् । अयमेवाभ्युपायो ज्ञातव्यानामर्थानां यो यथा ज्ञायते स तथेति । तद्यथा— कः शुक्लो नाम । यत्र शुक्लत्वमस्ति । किं शुक्लत्वं नाम । यत्र शुक्लशब्दप्रवृत्तिः । क्व तस्य प्रवृत्तिः । यत् शुक्लशब्द उच्चरिते प्रतीयते । तस्मान्न विज्ञानं प्रत्याख्याय कस्यचिद्रूपं निदर्शयितुं शक्यम् । नच नियोगतः प्रत्यये प्रतीते प्रत्ययार्थः प्रतीतो भवति । अप्रतीतेऽपि प्रत्यये सति अर्थः प्रतीयते एव, न हि विज्ञानं प्रत्यक्षम् । विज्ञेयोऽर्थः प्रत्यक्ष इति । एतत्पूर्वमेवोक्तम् । तदवश्यकर्तव्येऽपह्नवे कामं विज्ञानमपह्नूयेत नार्थ इत्येतदुक्तमेव । तस्मादस्ति सुखादिभ्योऽन्यः नित्यः पुरुषः ॥

मपास्येत्यादिना ॥ उपलम्भं परित्यज्य वस्तुनः अनुपलम्भोपपादने सर्वं शशविषाणतुल्यमेव स्यादिति भावः । 'अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिद्ध्यति" इति न्यायेन विज्ञानस्य तदन्यस्य च उल्लेखेन प्रतीतिस्स्यादित्याशङ्कां विज्ञानास्वयंप्रकाशवादेन निरस्यति—नच नियोगत इति ॥ नियमेनेत्यर्थः । पूर्वमेवोक्तमिति ॥ "नह्यज्ञातेऽर्थे कश्चित्" इत्यादिना शून्यवादे उक्तमित्यर्थः ॥ उक्तमेवेति ॥ "अपि च काममेकरूपत्वे" इत्यादिना तत्रैवोक्तमित्यर्थः ॥ विज्ञानवादनिरासोपसंहारः—तस्मादिति ॥

अथ यदुक्त "विज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति" इति। अत्रोच्यते— "अत्रैव मा भगवान् मोहान्तमापीपिपत्" इति परिचोदनोत्तरकाले अपह्नुत्य मोहाभिप्रायमस्य वर्णितवान्—"न वा अरे मोहं ब्रवीमि अविनाशी वा अरे अयमात्माऽनुच्छित्तिधर्मा मात्रासंसर्गस्त्वस्य भवति" इति। तस्मान्न विज्ञानमात्रम्। तस्माद्वैषम्यम्॥ यदुक्तम्—नचेष यातीति विधिशब्द इति। मा भूद्विधिशब्द। "स्वर्गकामो यजेत" इति वचनान्तरेणावगतमनुवदिष्यते। तस्मादविरोधः॥

यत्तु भूतचेतन्यार्थे ब्राह्मणमुपन्यस्त तदनुभाष्य परिहरति— अथयदुक्त विज्ञानघन इति॥ अत्राय पाठो माध्यन्दिनीय—"स यथा सैन्धवघनोऽनन्तरोऽबाह्य कृत्स्नो रसघन एव वा अरऽयमात्माऽनन्तरोऽबाह्य कृत्स्न. प्रज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यति न प्रेत्य सज्ञाऽस्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्य। सा होवाच मैत्रेयी अत्रैव मा भगवान् मोहान्तमपीपिपन्न वा अहमिम विजानामीति। स होवाच न वा अरे अह मोह ब्रवीमि अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मा मात्रासंसर्गस्त्वस्य भवति" इति॥

अयमर्थ.—याज्ञवल्क्य भार्यायै मैत्रेय्यै आत्मानमुपदिशति— स यथेति॥ सैन्धवखण्ड अनन्तर अन्तरवयवव्यतिरिक्त अबाह्यः बाह्यावयवव्यतिरिक्त सर्वोप्यवयव इत्यर्थ। यथा रसघनो भवति अन्तराले जात्यन्तरासकीर्णो भवति। अत्रान्तरत्वबाह्यत्वशून्याना मध्य वर्तिनामपि ग्रहणाय दार्ष्टान्तिकस्य निरवयवस्य सग्रहाय च व्यतिरेकमुखेन निर्देश। तथा प्रज्ञानघन एव प्रज्ञानैकशक्तिमानित्यर्थः।

## शब्दनित्यताधिकरणम्

कर्मैके तत्र दर्शनात् ॥ ६ ॥

उक्त नित्यश्शब्दार्थयोस्सम्बन्ध इति । तदनुपपन्न, शब्द-पूर्वमजरामृतत्वमभिधाय विज्ञानघन इत्यादिना विनाशित्वानुकीर्तनात् सम्मूढया मैत्रेय्या पूर्वापरविरोध चोद्यते—अत्रैवेति ॥ एतस्मिन्नेव-वस्तुनि मोहान्त मोहमध्य मा अपीपिपत् अपातयत् गमितवानसि समोहितवानिति यावत् । अतोऽहमिम न विजानामि विवेकत इति प्राह । परिहरति—याज्ञवल्क्य —स होवाच नवेति ॥ प्रज्ञानघन इति ज्ञानशक्तियुक्तस्यात्मन अभिधान, न ज्ञानमात्रस्य । स च भूतेभ्य समुत्थित· मुक्त भूतान्यनुविनश्यति मोक्षकाले तस्य मात्राशब्दवाच्यै देहेन्द्रियादिभि सबन्धनाशात् तेन रूपेण विनष्ट इव भवति । न प्रेत्य सज्ञाऽस्ति प्रेत्य भूतेभ्यो मुक्तस्य कारणाभावात् न ज्ञानमस्ति । अत न भूतेन्द्रियादीना चैतन्य, अन्यस्तु तेभ्यो नित्यश्चेतन । स चात्मा अविनाशी विनाशस्वभावरहित । न विद्यते उच्छित्ति यस्य सोऽनुच्छित्तिः नित्य इत्यर्थ । तादृशो धर्म विज्ञानशक्तिरूप यस्य स नित्यविज्ञानशक्तियुक्त, चेतनोऽपि नित्य तस्य चैतन्य-शक्तिरपि नित्येत्यर्थ ॥

अत्रोपनिषदुपन्यासस्यायमभिप्राय —स आत्मा स्वसवेद्य एव। शब्दस्तु शरीरादिविवेके प्रमाणम् । अतो वेदस्य प्रामाण्य च सिद्धम् । एव प्रतिपादितोऽपि शरीरादिविवेकः न दृढमवतिष्ठते, अह स्थूलो गच्छामीति शरीर एव बलादहमानोदयात् । तत दार्ढ्यार्थिभि वेदान्तविहितेष्वेव श्रवणमनननिदिध्यासनादिषु यतितव्यमिति ॥

अथ सबन्धस्य नित्यतामाक्षेप्तु शब्दानित्यत्वमाशङ्कते—कर्मेति ॥

स्यानित्यत्वात् विनष्टः शब्द । पुनरस्य क्रियमाणस्यार्थेना कृतकस्सम्बन्धो नोपपद्यते । न हि प्रथमश्रुताच्छब्दात् कश्चिदर्थ प्रत्येति । कथं पुनरनित्य शब्दः? प्रयत्नादुत्तरकाल दृश्यते यत । अत प्रयत्नानन्तर्यात् तेन क्रियत इति गम्यते । ननु अभिव्यञ्ज्यात्म एनम् । नेति ब्रूमः । न ह्यस्य प्रागभिव्यञ्जनात् सद्भावे किंचन प्रमाणमस्ति । संश्चाभिव्यज्यते नासन् ॥

अस्थानात् ॥ ७ ॥

नो खल्वप्युच्चरित मुहूर्तमप्युपलभामहे । अतो विनष्ट इत्यवगच्छाम । नच सन् नोपलभ्यते । अनुपलम्भकारणाना व्यवधानादीनामभावेऽप्यनुपलम्भनात् । नचासौ विषयमप्राप्त । आकाशविषयत्वात् । कर्णच्छिद्रेऽप्यनुपलम्भनात् ॥

करोतिशब्दात् ॥ ८ ॥

क्रियत इति कर्म कार्य शब्द केचित् शिक्षाकारादय मन्यन्ते । तत्र उच्चारणरूपप्रयत्नकाले दर्शनात् उच्चारणरूपात्प्रयत्नात् अनन्तर शब्दोपलम्भात् । तथाचानित्यश्शब्द प्रयत्नानन्तरदर्शनात् घटादिवदित्यत्र न्यायोऽभिप्रेत' । अत्र कार्यत्वानित्यत्वयो परस्पराविनाभावात् एकतरसिद्धावन्यतरसिद्धिर्भवतीति क्वचित् किंचित्साधनमुच्यते ॥

उत्तरकालमनुपलम्भादिति द्वितीय हेतुमाह—अस्थानादिति ॥ अस्यान्यथासिद्धिं निराह—नच सन् इति ॥ विषय. आश्रय' । आश्रयविनाशात् घटत्वादेरिव नानुपलब्धिरिति भाव । कर्णविवरान्त प्रवेशान्नोपलब्धिरिति शङ्कामप्यपनुदति—कर्णेति ॥

शब्द करोतीति अबाधितप्रामाणिकव्यवहारादिति तृतीय हेतुमाह—करोतीति ॥ स एवाय शब्द इत्यज्ञाना,प्रत्यभिज्ञेति भाव. ॥

अपिच शब्दं कुरु मा शब्दं कार्षीः इति व्यवहर्तारः प्रयुञ्जन्ति । न ते नूनमवगच्छन्ति स एवायं शब्द इति ॥

सत्त्वान्तरे च यौगपद्यात् ॥ ९ ॥

नानादेशेषु च युगपच्छब्दमुपलभामहे । तदेकस्य नित्यस्यानुपपन्नमिति । असति विशेषे नित्यस्य नानेकत्वम् । कार्याणां तु बहूनां नानादेशेषु क्रियमाणानां उपपद्यतेऽनेकदेशसंबन्धः । तस्मादनित्यः ॥

प्रकृतिविकृत्योश्च ॥ १० ॥

अपिच दध्यत्रेत्यत्र इकारः प्रकृतिः यकारो विकृतिः इत्युपदिशन्ति । यद्विक्रियते तदनित्यम् । इकारसादृश्यं च यकारस्योपलभ्यते । तेनापि तयोः प्रकृतिविकारभावो लक्ष्यते ॥

वृद्धिश्च कर्तृभूम्नाऽस्य ॥ ११ ॥

यौगपद्येन नानादेशोपलम्भादिति तुरीयं हेतुमाह—सत्त्वान्तरे-चेति ॥ सत्त्वान्तरे प्राण्यन्तरे श्रोतुरित्यर्थः । बहुषु वक्तृषु एकस्य श्रोतुरिति यावत् । तथा च नानादेशसंबन्धः कार्यत्वव्याप्य इति भावः । तत्र व्यतिरेकमाह—तदेकस्य नित्यस्यानुपपन्नमिति ॥ नित्यत्वादेकत्वं एकत्वाच्च नानादेशसंबन्धोऽनुपपन्न इत्यर्थः । स्वमतमाह—कार्याणा-मिति ॥ अस्मत्पक्षे तु वायवीयः शब्दः । वाय्ववयवदेशभेदात् कार्य-भेदः । ततश्चोपलब्धिभेद इति भावः ॥

अथ प्रकृतिविकृतिभावदर्शनादिति पञ्चमं हेतुमाह—प्रकृतीति॥ हेतुसिद्ध्यर्थं व्याकरणस्मृतिं सादृश्यं चाह—अपिचेति ॥ अभिवृद्धि-दर्शनादिति षष्ठं हेतुमाह—वृद्धिश्चेति ॥ तन्तुवृद्ध्या वर्धमानः पटादिरत्र दृष्टान्तः ॥

अपिच बहुभिरुच्चारयद्भिः महान् शब्दः श्रूयते। स यद्यभिव्यज्यते बहुभिरल्पैश्चोच्चार्यमाणः तावानेवोपलभ्येत। अतो मन्यामहे—नूनमस्यैकैकेन कश्चिदवयवः क्रियते, यत्प्रचयादयं महानुपलभ्यते॥

मम तु तत्र दर्शनम्॥ १२॥

तुशब्दात्पक्षो विपरिवर्तते। यदुक्तं प्रयत्नादुत्तरकालेदर्शनात् कृतकोऽयमिति। यदि विस्पष्टेन हेतुना शब्दस्य नित्यत्वं वक्तुं शक्ष्यामः, ततो नित्यप्रत्ययसामर्थ्यात् प्रयत्नेनाभिव्यज्यत इति भविष्यति। यदि प्रागुच्चारणादनभिव्यक्तः प्रयत्नेनाभिव्यज्येत, तस्मादुभयो पक्षयोस्सममेतत्॥

सतः परमदर्शनं विषयानागमात्॥ १३॥

यदपरं कारणमुक्तं उच्चरितप्रध्वस्त इति। अत्रापि यदि शक्ष्यामो नित्यतामस्य विस्पष्टं वक्तुं, ततो नित्यप्रत्ययसामर्थ्यात् कदाचिदुपलम्भं कदाचिदनुपलम्भं दृष्ट्वा किञ्चिदुपलम्भस्य निमित्तं कल्पयिष्यामः। तच्च संयोगविभागसद्भावे सति भवतीति संयोगविभागावेवाभिव्यञ्जकाविति वक्ष्यामः॥

एतेषां षण्णां हेतूनां साधारण्यमासिद्धिं च षड्भिस्सूत्रैराह—समिति॥ तुशब्दादिति॥ सूत्रे त्वादिशब्दप्रयोगः सिद्धान्तादिसूचक इति भावः। सममेतदिति॥ दर्शनं हि तत्र सत्तां गमयति न कालान्तरे निषेधति। तेन विपक्षेऽपि कालान्तरे सत्त्वसंभवात् तत्र दर्शनमनेकान्तमिति भावः॥

सतः परमदर्शनमिति॥ सत एवानुपलम्भः निमित्तासमवधानेन तिरोधानादिति सूत्रार्थः। मृदा तिरोहितमूलोदकादिकमुदाहरणम्।

उपरतयोस्संयोगविभागयोश्श्रूयत इति चेन्नैतदेवम्— न नूनमुपरमन्ति संयोगविभागा, यत उपलभ्यते शब्द इति। न हि ते प्रत्यक्षा इति ॥

यदि शब्दं संयोगविभागा एवाभिव्यञ्जन्ति, न कुर्वन्ति, आकाशविषयत्वाच्छब्दस्य आकाशस्यैकत्वात् य एवायमत्र श्रोत्राकाशः स एव देशान्तरेष्वपीति स्रुघ्नस्थैस्संयोगविभागैर भिव्यक्तः पाटलिपुत्रेऽप्युपलभ्येत। यस्य पुनः कुर्वन्ति तस्य वाय वीयाः संयोगविभागा वाय्वाश्रितत्वात् वायुष्वेव करिष्यन्ति, यथा तन्तवः तन्तुष्वेव पटम्। तस्य पाटलिपुत्रेष्वनुपलम्भो युक्तः स्रुघ्नस्थत्वात्तेषाम् ॥

प्रकृते च निमित्तं वायवीयास्संयोगविभागा ध्वनिपदवाच्या। ते हि चाक्षुषस्य तेजसः अनुग्रहं कुर्वन् प्रदीप इव श्रोत्रं संस्कुर्वन्तोऽभिव्यञ्जन्तीति सिद्धान्तः ॥

उपरतयोरिति ॥ इतः परं पूर्वोत्तरपक्षवादिनौ गूढाभिप्रायावेव विवदतः। तत्र ताल्वादिसंयोगविभागाभिप्रायं पूर्वपक्षिणः। वायवीयसंयोगविभागाभिप्रायमुत्तरपक्षिणः। न हि ते प्रत्यक्षा इति ॥ ताल्वादिस्था अपि कार्यसामर्थ्यरूपेणाप्रत्यक्षा इत्यर्थः ॥

यदि शब्दमिति पुनराशङ्का ॥ तत्र त्रेधा विकल्पः—ध्वनिभिश्शब्दस्य संस्कारः, किं वा श्रोत्रस्य, उतोभयस्येति। त्रिष्वपि पक्षेषु सर्वगतोऽयमेको नित्यश्शब्दः आकाशरूपेण श्रोत्रेण सर्वैः श्रूयेतेति दोषः। आकाशविषयत्वात् आकाशाश्रितत्वादित्यर्थः ॥

उत्तरं श्रोत्रसंस्कारपक्षेण—यस्यापीति ॥ मते इति शेषः। श्रोत्र

यस्याप्यभिव्यञ्जन्ति तस्याप्येष न दोषः । दूरे सत्याः कर्णशष्कुल्या अनुपकारकाः संयोगविभागाः । तेन दूरे यच्छ्रोत्रं तेन नोपलभ्यन्त इति ॥

नैतदेवं—अप्राप्ताश्चेत्संयोगविभागाः श्रोत्रस्योपकुर्युः सन्निकृष्टविप्रकृष्टदेशस्थौ युगपच्छब्दमुपलभेयाताम् । नच युगपदुपलभेते, तस्मान्नाप्राप्ता उपकुर्वन्ति, न चेदुपकुर्वन्ति, तस्मादनिमित्त शब्दोपलम्भने संयोगविभागाविति ॥

नैतदेवं—अभिघातेन हि प्रेरिताः वायवस्तिमितानि वाय्वन्तराणि प्रतिबाधमानाः सर्वतोदिक्कान् संयोगविभागानुत्पादयन्ति यावद्वेगमभिप्रतिष्ठन्ते । ते च वायोरप्रत्यक्षत्वात् संयोगविभागा नोपलभ्यन्ते । अनुपरतेष्वेव तेषु शब्द उपलभ्यते नोपरतेषु । अतो न दोषः । अत एव चानुवातं दूरादुपलभ्यते शब्दः ॥

प्रयोगस्य परम् ॥ १४ ॥

यदपरं कारणमुक्तं—शब्दं कुरु मा कार्षीरिति व्यवहर्तारः प्रयुञ्जन्ति । तत्समये नियतशब्दः, शब्दप्रयोगं कुर्विति भविष्यति । यथा गोमयान् कुर्विति सहारे ॥

हि धर्माधर्मोपगृहीतविशिष्टशक्त्युपेतकर्णशष्कुल्यवच्छिन्नमाकाशम् । तादृशी दिग्वा श्रोत्रम् । ततश्चाधिष्ठानभेदाद्वा ध्वनिभेदाद्वा सर्वा व्यवस्था सिध्यतीति भावः ॥

ताल्वादिसंयोगविभागाभिप्रायेणैव संस्कारानुपपत्तिशङ्कायां—नैतदेवमप्राप्ताश्चेदित्यादिना कृतायां गूढाभिसन्धिं प्रकटीकृत्य संस्कारसमर्थ्यं शब्दश्रवणमार्गं सिद्धान्ती प्रदर्शयति—नैतदेवमभिघातेनेति ॥ प्रयत्नाभिहताः कौष्ठ्या वायव इत्यर्थः ॥ वैशेषिकाणां त्वयं मार्गः—

आदित्यवद्यौगपद्यम् ॥ १९ ॥

यत्तु—एकदेशस्य मत नानादेशेषु युगपद्दर्शनमनुपपन्न मिति। आदित्य पश्य देवानांप्रिय। एकस्सन्ननेकदेशावस्थित इव लक्ष्यते। कथपुनरवगम्यते एक आदित्य इति। उच्यते—प्राङ्मुखो देवदत्त पूर्वाह्णे सप्रति पुरस्तादादित्य पश्यति। तस्य दक्षिणतोऽवस्थित न द्वौ पश्यति आत्मनश्च सप्रति न तिरश्चीन देवदत्तस्यार्जवे। तस्मादेक आदित्य इति। दूरत्वादस्य देशो नावधार्यते, अतो व्यामोहः। एव शब्देऽपि व्यामोहादनवधारण देशस्य। यदि श्रोत्र सयोगविभागदेशमागत्य शब्दं गृह्णीयात् तथापि तावत् अनेकदेशता कदाचिदवगम्येत। नच तत्स योगविभागदेशमागच्छति। प्रत्यक्षा हि तर्णशष्कुली तद्देशस्था गृह्यते। वायवीया पुनस्सयोगविभागा अप्रत्यक्षस्य वायो कर्णशष्कुलीप्रदेशे प्रादुर्भवन्तः नोपलभ्यन्न इति नानुपपन्नम्।

प्रथम भेरीदण्डसयोगाद्विभागाद्वा शब्दो निष्पद्यते। स च वीचीसतानवत् समानजातीयान् सर्वतस्ततनोति। तेषु च सतन्यमानेषु स्वदेशप्राप्तश्शब्द श्रोत्रेण गृह्यत इति॥ सहार पिण्डीकरणम्॥

आदित्यवदिति॥ अयमाशय.—एकत्वेऽपि व्यामोहरूप नानादेशोपलम्भ दृष्ट। यथा—यस्मिन् खलु वृक्षे पर्वते वा यावद्देशवर्तिनि सूर्यस्योदयमस्त वा केचित्पश्यन्ति, तद्देशवासिनोऽन्ये तत परस्तात्तावद्दूरे पश्यन्तीति व्यक्त नानादेशोपलम्भनमिति॥ आदित्यस्यैकत्वमुपपादयति—उच्यते प्राङ्मुख इति॥ सप्रति आर्जवेन। द्वयोरदर्शन विशदयति—नात्मनश्चेति॥ तथाच योग्यानुपलम्भान्न भिन्न इति भाव.॥ यदि श्रोत्रमिति॥ वक्तृवक्तृप्रदेशाना भिन्नत्वात् भिन्नदेशो-

अत एव व्यामोहः—यत् नानादेशेषु शब्द इति । आकाश-देशस्थश्च शब्दः, एकं च पुनराकाशम् । अतोऽपि न नानादेशेषु । अपिचैकरूप्ये सति देशभेदेन कामं देशा एव भिन्नाः न तु शब्दः । तस्मा दयमप्यदोषः ॥

वर्णान्तरमविकारः ॥ १६ ॥

नच दध्यत्र इत्यत्र प्रकृतिविकारभावः । शब्दान्तरमिकाराद्यकारः । न हि यकारं प्रयुञ्जाना इकारमुपाददते । यथा कटं चिकीर्षन्तो वीरणानि । नच सादृश्यमात्रं दृष्ट्वा प्रकृतिर्विकृतिर्वोच्यते । न हि दधिपिटकं दृष्ट्वा कुन्दपिटकं च प्रकृतिविकृति-भावोऽवगम्यते । तस्मादयमप्यदोषः ॥

नादवृद्धिपरा ॥ १७ ॥

यच्चैतत् बहुभिः भेरीमाध्मद्भिः शब्दमुच्चारयद्भिः महान् शब्द उपलभ्यते, तेन प्रतिपुरुषं शब्दावयवप्रचय इति गम्यते । नैवम्—

पलम्भः व्यामोह इति भावः ॥ अपिचैक्यरूप्ये सतीति ॥ अबाधितप्रत्य-क्षप्रत्यभिज्ञया ऐकरूप्ये अवगते सति सर्वमपि शब्दभेदानुमानं बाधितमिति तात्पर्यम् ॥ अयमपीति ॥ सत्त्वान्तरेचेति सूत्रोक्त इत्यर्थः ॥

तत्र स्मृतिमसिद्धयति—नचदध्यत्रेति ॥ स्वतन्त्रस्थितयोरेव दधि दध्यशब्दयोः अचिपरतस्संहितायां पूर्वमपवदत्युत्तर इति "इको यणचि" इति सूत्रार्थः । अपरथा "सिद्धे शब्दार्थसंबन्धे, नियमार्थं व्याकरणम्" इति शास्त्रं विरुध्येतेति भावः । सादृश्यमप्यन्यथयति—नचसादृश्यमात्रमिति ॥ पिटकं वंशवेत्रादिमयं पात्रम् ॥

निरवयवो हि शब्दः, अवयवभेदानभ्युपगमात्, निरवयवत्वाच्च महत्त्वानुपपत्तिः। अतो न वर्धते शब्दः। मृदुरेकेन, बहुभिश्चोच्चार्यमाणे तान्येवाक्षराणि कर्णशष्कुलीमण्डलस्य सर्वानपि प्राप्नुवद्भि' सयोगविभागैः नैरन्तर्येणानेकशो ग्रहणात् महानिवावयववानिव उपलभ्यन्ते। संयोगविभागाः नैरन्तर्येण क्रियमाणाः शब्दमभिव्यञ्जन्तो नादशब्दवाच्याः। तेन नादस्यैषा वृद्धि। न शब्दस्येति॥

निरवयवो हीति॥ अवयवाभावो योग्यानुपलम्भासिद्ध इति भाव। नाद व्याख्याति—सयोगविभागा इति॥ नादस्यैषा वृद्धिरिति॥ दर्पणादिव्यञ्जकाधीना मुखादिष्वल्पत्वमहत्वबुद्धिर्दृष्टा। तथा महत्या मृदि खातायामाकाशे महत्त्वबुद्धिः। प्रदीपादितेजोबाहुल्ये घटादावपि पट्वी बुद्धिरिति। ततश्च दीर्घादिबुद्धिरपि नादायत्तेति बोध्यम्॥

इद पुनरिहावधेयम्—वायुसयोगध्वनिवादो भाष्योक्त। तन्मते वायोरश्रावणत्वात् शङ्खादिनादाना ध्वनिरूपाणा श्रवण न स्यात् इति वायुगुणीभूतान् ध्वन्याख्यान् शब्दान् श्रोत्रग्राह्यान् केचिदिच्छन्ति। तेच तात्वादिसयोगविभागलाभे वर्णान् व्यञ्जन्ति स्वय चोपलभ्यन्ते। अत एव दूरादधीयमानेषु वर्णानश्रृण्वन्तोऽपि ध्वनिमात्र श्रृण्वन्ति। शङ्खभेर्यादिध्वनयस्तु केवल स्वयमुपलभ्यन्ते इत्याहुः। सोऽय वायुगुणध्वनिवाद॥ वैयाकरणास्तु स्वरव्यञ्जनरूपान् वर्णानेव ध्वनिमाहु., शब्दं तु स्फोटमाहु'॥

परंतु—ध्वनित्वं शब्दसामान्य, अत्वकत्वादिक तु शब्दविशेषः। ताल्वादिवायव' विशेषव्यञ्जका। इतरे वायवः सामान्यव्यञ्जका. इति वदन्ति। वायुगुणध्वनिवादेऽपि तस्य गुणस्यामूर्तस्य

नित्यस्तु स्याद्दर्शनस्य परार्थत्वात् ॥ १८ ॥

नित्यश्शब्दो भवितुमर्हति । कुतः ? दर्शनस्य परार्थत्वात् । दर्शनमुच्चारण, तत्परार्थं, परं अर्थं प्रत्याययितुम् । उच्चरितमात्रे हि विनष्टे शब्दे नचान्योऽन्यान् अर्थं प्रत्याययितुं शक्नुयात् । अतो न परार्थमुच्चार्येत । अथ न विनष्ट, ततो बहुश. उपलब्धत्वादर्थावगम इति युक्तम् । अर्थवत्सादृश्यादर्थावगम इति चेत् न कश्चिदर्थवान् सर्वेषा नवत्वात् । कस्यचित्पूर्वस्य कृत्रिमस्संबन्धो भविष्यतीति चेत्—तदुक्तम् । सदृश इति चावगते व्यामोहात्प्रत्ययो व्यावर्तेत शालाशब्दान्मालाप्रत्यय इव । यथा गावीशब्दात् सास्नादिमिति प्रत्ययस्यानिवृत्तिः तद्वद्भविष्यतीति महत्त्वादिक आश्रयाधीनमेव वक्तव्य, ततश्च वायुसयोगवृद्ध्या वर्णवृद्धिरिति भाष्य सुसङ्गत भवति । नादशब्दवाच्या इत्यत्र नाद्यन्ते व्यज्यन्ते एभिरिति व्युत्पत्तिर्बोध्या इति ॥

नित्य इति ॥ "सम तु तत्रदर्शनम्" "इत्यत्रभाष्ये यदि विस्पष्टेन हेतुना" इत्युक्तिरेतदादिसूत्राभिप्रायेण । उच्चार्यमाणस्य परप्रत्यायकत्वान्यथानुपपत्त्या नित्यश्शब्द इत्यर्थापत्तिरत्राभिमता । बहुश उपलब्धत्वादिति ॥ गृहीतसङ्गतिकत्वादित्यर्थ ॥

प्रथमः उच्चरित शब्दः अर्थवान् कर्णशष्कुलीप्रदेशावच्छिन्नस्तु तत्सदृश. । ततश्चार्थावगतिरिति नार्थापत्तिरिति शङ्कते—अर्थवदिति ॥ समाधत्ते—नकश्चिदिति ॥ पूर्वस्येति ॥ जगदादिवर्तिन इत्यर्थः । तदुक्तमिति ॥ द्वितीयशङ्कासमाधानम् सर्वेष्वपि शब्देष्वप्रसिद्धार्थेषु सबन्धकरणमशक्यमिति या सबन्धाकरणे युक्तिरुक्ता साऽत्र स्मर्तव्येत्यर्थ ॥ दोषान्तरमाह—सदृश इतीति ॥ पुनश्शङ्का–गावीति ॥

चेत्—न हि, गोशब्दं तत्रोच्चारयितुमिच्छा । नं ह्यन्यशब्दोच्चिचारयिषा । नचैकेनोच्चारणयत्नेन सव्यवहारश्चार्थसंबन्धश्च शक्यते कर्तुम् । तस्माद्दर्शनस्य परार्थत्वात् नित्यश्शब्द ॥

सर्वत्र यौगपद्यात् ॥ १९ ॥

गोशब्दे उच्चरिते सर्वगवीषु युगपत् प्रत्ययो भवति । अत आकृतिवचनोऽयम् । नचाकृत्या शब्दस्य संबन्ध· शक्यते कर्तुम् । निर्दिश्य हि आकृतिं कर्ता सबध्नीयात् । गोपिण्डे च बहूनामाकृतीना सद्भावात् शब्दमन्तरेण गोशब्दवाच्यां विभक्तामाकृतिं केन प्रकारेणोपदेक्ष्यति । नित्ये तु सति गोशब्दे बहुकृत्व उच्चरितः श्रुतपूर्वश्चान्यासु गोव्यक्तिषु अन्वयव्यतिरेकाभ्या आकृतिवचनमवगमयिष्यति, तस्मादपि नित्यः ॥

संख्याभावात् ॥ २० ॥

अष्टकृत्वो गोशब्द उच्चरित इति वदन्ति नाष्टौ गोशब्दा

निषेधति—नहीति ॥ हीति हेतु विवृणोति—गोशब्दमिति ॥ नचैकेनेति ॥ उच्चारणसबन्धकरणव्यवहारादिरूपाः क्रिया· क्रमस्वभावाः युगपत्कर्तुमशक्या इत्यर्थ· ॥

सर्वत्रेति ॥ अत्र नित्यया जात्या अनित्यस्य शब्दस्य न सबन्ध· कर्तुं शक्य इति सबन्धनित्यताद्वारं शब्दनित्यत्वमुच्यत इति केचिदाहु । सबन्ध नित्यत्वार्थमेव शब्दनित्यत्वसाधन सुसङ्गतमिति व्याख्यायते । कर्तुमिति ॥ सत्त्वद्रव्यत्वपार्थिवत्वप्राणित्वलाङ्गूलशुक्लगमनादिसम्मुग्धत्वाद्वस्तुन· विना श्रवणप्रयोगबाहुल्येन निष्कृष्टार्थवाचित्व कथयितु ग्रहीतु वा न शक्यमित्यर्थः । नित्ये इति ॥ तथाच बहुशश्श्रवणाय स्थैर्यमास्थेयम् । ततश्चानपेक्षत्वसूत्रेण वक्ष्यमाणेन नित्यतासिद्धिरिति भाव· ॥

अष्टकृत्व इति ॥ "सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्"

इति। किमत' यद्येवम् । अनेन वचनेनावगम्यते प्रत्यभिजानन्तीति। वय तावत्प्रत्याभिजानीमो न नः करणदौर्बल्यम्। एवमन्येऽपि प्रत्यभिजानन्ति स एवायमिति। प्रत्यभिजानाना वयमिवान्येऽपि नान्य इति वक्तुमर्हन्ति ॥

अथ मत—अन्यत्वे सति सादृश्येन व्यामूढाः स इति वक्ष्यन्ति। तन्न—न हि ते सदृश इति प्रतियन्ति। किं तर्हि स एवायमिति। विदिते च स्फुटेऽन्यत्वे व्यामोह इति गम्यते। नचायमन्य इति प्रत्यक्षम्। अन्यद्वा प्रमाणमस्ति ॥

स्यादेतत्—बुद्धिकर्मणी अपि ते प्रत्यभिज्ञायेते। ते अपि नित्ये प्राप्नुत। नैष दोष—न हि ते प्रत्यक्षे। अथ प्रत्यक्षे

इति विहित स्वार्थे प्रत्ययः क्रियावतामभेदे भवति ' तेनैकस्यैव द्रव्यस्य उच्चारणक्रियाभ्यावृत्त्यन्यथानुपपत्त्या नित्यत्वसिद्धिरिति भाव.। द्रव्यभेदेऽपि भुक्तवन्तोऽष्टकृत्वो ब्राह्मणा इति प्रयोगात् स प्रयोग. नाभेदैकान्त इत्याशयेन शङ्कते किमतो—यद्येवमिति ॥ नेदमनुमान, किं तु तेन प्रयोगेणोपलक्षिता प्रत्यभिज्ञाऽत्र विवक्षितेति समाधत्ते—अनेन वचनेनेति॥ साक्षादनुक्तिस्तु सर्वजनीनेनानेन प्रयोगेण प्रत्यभिज्ञाया दार्ढ्यं सम्पादयितुम् ॥

इन्द्रियदोषनिबन्धना भ्रान्तिरसर्वजनीनाऽपि विषयदोषनिबन्धना तलमलिनिमभ्रान्तिवत् सर्वजनीना भवितुमर्हतीत्याशङ्कते—अथमतमन्यत्वे सतीति ॥ तन्न नहीति ॥ अनुपलब्धिपराहतो विषयदोष इति भावः ॥

अथ स्पष्टभेदे बुद्धिकर्मादौ प्रत्यभिज्ञाया अनैकान्तिकतामाशङ्कते—स्यादेतदिति ॥ श्रोत्रग्राह्यत्वविशेषित प्रत्यभिज्ञान नानेका-

नित्ये एव ॥

ह्यस्तनस्य शब्दस्य विनाशात् अन्योऽद्यतन इति चेत्— नैष विनष्टः, यत एनं पुनरुपलभामहे । न हि प्रत्यक्षदृष्टं मुहूर्तमदृष्ट्वा पुनरुपलभ्यमानं प्रत्यभिजानन्तो विनष्टं परिकल्पयन्ति । परिकल्पयन्तो द्वितीयसंदर्शने मातरि जायायां पितरि वा नाश्वस्युः । न ह्यनुपलम्भमात्रेण नास्तीत्यवगम्य नष्ट इत्येव कल्पयन्ति । अप्रमाणतायां विदितायां नास्तीत्यवगच्छाम । न हि प्रमाणे प्रत्यक्षे सति अप्रमाणता स्यात् । अस्तीति पुनर्व्यामोहेनावगम्यमाने न कचिदप्यभावः । नचासिद्धे अभावे व्यामोहः । नच सिद्धोऽभावः । तस्मादसति व्यामोहे नाभावः । तदेतदानुपूर्व्या सिद्धम् । तस्मात्पुरस्तादनुच्चारित अनुपलभमाना न्तामिति समाधत्ते—नैष दोष इति ॥ शब्दत्वमद्य दृष्टान्तः । अत्र कर्मपदमतीन्द्रियपरमाण्वादिवृत्तिकर्मपरं बोध्यम् । प्रत्यक्षद्रव्यवर्तिना तु कर्मणा शब्दवदेव प्रत्यक्षत्वं नित्यत्वं चेष्टमेवेत्याह—अथ प्रत्यक्षे इति ॥ बुद्धिपदमपि यदि ज्ञानरूपविकारलक्षणातीन्द्रियव्यापाराभिप्रायं तदा तस्याप्रत्यक्षत्वादनित्यत्वमेव । चितिशक्तिस्वभावपुरुषाभिप्रायं चेत् स नित्य एवेति बोध्यम् ॥

एतन्मनसि कृत्वाऽऽह नित्ये एवेति भाष्यकृत् ।
एतयैव दिशा वाच्या शुक्लादेरपि नित्यता ॥ वा ॥

इति । ह्यस्तनस्येत्यादि ॥ अत्र सर्वत्र ज्ञानार्थैक्यगूढाभिसन्धे शङ्का, विवेकाभिसन्धे समाधानं चेति रहस्यम् ॥ अप्रमाणतायामिति ॥ सदुपलम्भकप्रमाणसामान्याभावे इत्यर्थः ॥ आनुपूर्व्येति ॥ अनुपलब्ध्यभावव्यामोहाभावव्यामोहाभावानां षण्णां शृङ्खलयेत्यर्थः ॥

अपि न विनष्ट इत्यवगन्तुमर्हन्ति । यथा गृहान्निर्गता· सर्वगृह-जनमपश्यन्तः पुन· प्रविश्योपलभमाना अपि न प्राक्प्रवेशात् विनष्ट इत्यवगच्छन्ति । तद्वदेनमपि नान्य इति वक्तुमर्हन्ति ॥

येऽपि सर्वेषां भावानां प्रतिक्षणं विनाशमभ्युपगच्छन्ति तेऽपि न शक्नुवन्ति शब्दस्य वदितुम् । नच क्षयो लक्ष्यते । स इति प्रत्यक्ष· प्रत्यय । सदृश इत्यानुमानिकः । नच प्रत्यक्ष विरुद्धमनुमानमुदेति, स्वकार्यं वा साधयति तस्मान्नित्य· ॥

अनपेक्षत्वात् ॥ २१ ॥

येषामनवगतोत्पत्तीना द्रव्याणा भाव एव लक्ष्यते तेषामपि केषाचिदनित्यता गम्यते, येषा विनाशकारणमुप-लभ्यते, यथा अभिनवं पट दृष्ट्वा, नचैन क्रियमाणमुप-लब्धवान् । अथवा अनित्यत्वमवगच्छति रूपमेव दृष्ट्वा । तन्तुव्यतिषङ्गजनितोय तन्तुव्यतिषङ्गविनाशात् तन्तुविनाशाद्वा विनश्यतीत्यवगच्छति । नैव शब्दस्य किंचित्कारणमवगम्यते यद्विनाशाद्विनङ्क्ष्यतीत्यवगम्यते ॥

प्रख्याभावाच्च योगस्य ॥ २२ ॥ (योग्यस्येति पाठान्तरम्)

इदं पदेभ्य· केभ्यश्चिदुत्तरं सूत्रम्—ननु वायुकारणक-

क्षणिकवादमपाकरोति—येऽपि सर्वेषा भावानामिति ॥

येषामिति ॥ अथवेति ॥ उत्पत्त्यदर्शनेऽपि वह्न्याविनाशकसम-वधानात् क्वचिन्नाशो दृष्ट पटादौ । तथा असमवायिकारणविनाशात्स-मवायिकरणविनाशाद्वा नाशोऽपि पटादावेव दृष्ट । द्वैविध्यस्यापि प्रकृते न सभव इति वाक्यद्वयस्याशयः ॥

इद पदेभ्य इति ॥ अध्याहार्यशङ्कावाक्यस्योत्तर सूत्रमित्यर्थ ।

स्स्यादिति। वायुरुद्गतः संयोगविभागै शब्दो भवतीति। तथाच शिक्षाकारा आहुः–"वायुरापद्यते शब्दताम्" इति। नैतदेवम्–वायवीयश्चेच्छब्दो भवेत् वायोस्सन्निवेशाविशेषस्स्यात्। नच वायवीयानवयवान् शब्दे सत प्रत्यभिजानीम यथा पटस्य तन्तुमयान्। नचैव भवति। स्याच्चेदेव स्पर्शनेनोपलभेमहि। नच वायवीयानवयवान् शब्दगतान् स्पृशाम, तस्मान्नवायुकारणकः। अतो नित्य ॥

लिङ्गदर्शनाच्च ॥ २३ ॥

लिङ्ग चैवं भवति "वाचा विरूपनित्यया" इति। अन्यपरं हीद वाक्यं वाचो नित्यतामनुवदति। तस्मान्नित्यश्शब्द ॥

तानि पदानि दर्शयति—नन्विति ॥ विवृणोति—वायुरुद्गत इति ॥ शब्दविशेषणम्। सूत्रार्थमाह—वायवीयानवयवान् शब्दे सतीति ॥ योगपद सबन्धपरम्। अथ पाठान्तरेण सूत्रार्थमाह—नचैवमिति ॥ अत्र योग्यपद त्वगिन्द्रियग्रहणयोग्यतापारमिति भाव ॥

लिङ्गमिति ॥ "तस्मै नूनमभिद्यवे। वाचा विरूप नित्यया। वृष्णे चोदस्व सुष्टुतिम्" इति ॥ (६–५–२५) अस्यायमर्थः—प्रातरनुवाके आग्नेये क्रतौ आश्विनशस्त्रसूक्ते आङ्गिरसस्य विरूपस्यार्षे अष्टमी ऋक्। हे विरूप एतन्नामकमहर्षे त्व तस्मै प्रसिद्धाय अभिद्यवे अभिगततृप्तये वृष्णे वर्षकाय अग्नये नित्यया उत्पत्ति रहितया वाचा मन्त्ररूपया सुष्टुतिं नूनमिदानीं चोदस्व स्तुहीत्येवमृषिस्वात्मान ब्रवीति इति ॥

यद्यपि शब्दार्थसबन्धा नित्या, तथापि वाक्यार्थस्य निर्मूलत्वात् न चोदनाप्रामाण्य सिध्यति। निर्मूलायाश्च प्रतीतेरुत्पन्नाया अपि

## वाक्यार्थाधिकरणम्

उत्पत्तौ वाऽवचनास्स्युरर्थस्यातन्निमित्तत्वात् ॥ २४ ॥

यद्यप्यौत्पत्तिकः नित्यः शब्दोऽर्थसंबन्धश्च । तथापि नचोदनालक्षणो धर्म , चोदना हि वाक्यम् , " न हि अग्निहोत्रं जुहुयात्स्वर्गकाम " इत्यतो वाक्यादन्यतमस्मात्पदात् अग्निहोत्रात्स्वर्गो भवतीति गम्यते । गम्यते तु पदत्रये उच्चरिते । न चात्र चतुर्थश्शब्दोऽस्ति अन्योऽत पदत्रयसमुदायात् । न चाय समुदायोऽस्ति लोके, यतोऽस्य व्यवहारादर्थोऽवगम्यते । पदान्यमूनि प्रयुक्तानि तेषां नित्योऽर्थः । अप्रयुक्तश्च समुदायः । तस्मात्समुदायस्यार्थः कृत्रिमो व्यामोहो वा । नच पदार्था एव वाक्यार्थः, सामान्ये हि पद प्रवर्तते, विशेषे वाक्यम् । अन्यच्च सामान्य, अन्यो विशेषः । नच पदार्थाद्वाक्यार्थावगति । असंबन्धात् । असति चेत्संबन्धे कस्मिंश्चित्पदार्थेऽवगते अर्थान्तरमवगम्येत, एकस्मिन्नवगते सर्वमवगतं स्यात् । नचैतदेव भवति, तस्मादन्यो वाक्यार्थ ॥

प्रतिभावदप्रामाण्य, अतो व्यर्थ प्रयास इति पुनराक्षेप —उत्पत्तौवेति ॥ शब्दार्थादीना उत्पत्तावपि औत्पत्तिकत्वेऽपि नित्यत्वेऽपि चोदना अवचना अबोधकास्स्यु , अप्रमाणमिति यावत् । अर्थस्य वाक्यार्थस्य अतन्निमित्तत्वात् वेदमूलकत्वानुपपत्तेरित्यर्थ । प्रत्येकसमुदायविकल्पेनानुपपत्तिं विशदयति—चोदना हीति ॥ गम्यते त्विति ॥ प्रत्येकमूलत्वनिराकरणपरमिद न स्वार्थपरम् । नचायमित्यनन्तरमेव समुदायमूलत्वनिराकरणात् । यौगपद्यविरहाद्वर्णानां समुदायासिद्धिरिति भाव. । कृत्रिम सामयिक । नैयायिकवासनया । व्यामोह भ्रमः। शाक्यवासनया॥ नच पदार्था एवेति ॥ गौरश्व. पुरुष इत्यादावतिप्रसङ्गादिति भाव ॥

स्यादेतत्-अप्रयुक्तादपि वाक्यादसति सबन्धे स्वभावादर्थावगम इति यदि कल्प्येत शब्दो धर्ममात्मीयं व्युत्क्रामेत्, नचैष शब्दधर्मः—यदप्रयुक्तादपि शब्दादर्थः प्रतीयते। नहि प्रथमश्रुतात् कुतश्चिच्छब्दात् केचिदर्थं प्रतियन्ति॥ तदभिधीयते-पदधर्मोय न वाक्यधर्मः। वाक्याद्धि प्रथमावगतादपि प्रतियन्तोऽर्थं दृश्यन्ते। नैतदेव—यदि प्रथमश्रुतादवगच्छेयुः, अपितर्हि सर्वेऽवगच्छेयुः पदार्थविदोऽन्ये च। न त्वपदार्थविदोऽवगच्छन्ति तस्मान्नैतदेवम्॥

ननु पदार्थविद्भिरप्यवगच्छद्भिः अवृत्त एव वाक्यार्थसबन्धोऽवगतो भविष्यति, पदार्थवेदनेन हि संस्कृता अवगमिष्यन्ति, यथा तमेव पदार्थं द्वितीयादिश्रवणेनेति॥ नेतिब्रूम—यदि वाक्येऽन्त्यो वर्णः पूर्ववर्णजनितसंस्कारसहितः पदार्थेभ्योऽर्थान्तरं प्रत्याययति क उपकारस्तु तदानीं पदार्थज्ञानादवकल्पते। तस्मात्कृत्रिमो वाक्यार्थप्रत्ययो व्यामोहो वा। न पदार्थद्वारेण संभवति वाक्यार्थज्ञानमिति॥

स्वभावादिति॥ अकस्मादित्यर्थः॥ नैतदेव यदीति पुनराशङ्का॥ न त्वपदार्थ इति समाधानम्॥ दर्शनानुरोधान्नातिप्रसङ्ग इति भावः॥

संस्कारसबन्धेन पदार्थज्ञानं वाक्यार्थज्ञानकारणमिति शङ्कते—ननुपदार्थेति॥ अवृत्तः अपूर्व इत्यर्थः। द्वितीयादीति॥ प्रथमश्रुतपदार्थज्ञानमूलं हि द्वितीयादिज्ञानमित्यर्थः। अन्त्यवर्णलक्षणं वाक्यं कृत्रिमेण सबन्धेन वाक्यार्थं प्रत्याययति, नात्र पदार्थज्ञानोपकार इति समाधत्ते—नेतिब्रूम इति॥

नन्वेवं भविष्यति--सामान्यवाचिनः गौरिति वा अश्व इति वा पदस्य विशेषक शुक्ल इति वा कृष्ण इति वा पदमन्तिकादुपनिपतति यदा, तदा वाक्यार्थोऽवगम्यते॥ तन्न—कथमिव? गौरिति वा अश्व इति वा सामान्यवाचिनः पदात् सर्वगवीषु सर्वाश्वेषु च बुद्धिरुपसर्पन्ती श्रुतिजनिता वाक्यानुरोधेन कुतश्चिद्विशेषादपवर्तेत। नच शुक्ल इत्यादेर्विशेषवचनस्य कृष्णादिनिवृत्तिर्भवति शब्दार्थः। नचानर्थको मा भूदित्यर्थकल्पना शक्या। अतो न पदार्थजनितो वाक्यार्थः। तस्मात्कृत्रिमः॥

पदसंघाताः खल्वेते, संघाताश्च पुरुषकृता दृश्यन्ते, यथा—

नीलोत्पलवनेष्वद्य चरन्तश्चारुसरवाः।
नीलकौशेयसंवीताः प्रनृत्यन्तीव सारसाः॥

अतो वैदिका अपि पुरुषकृता इति॥

नन्वेवभविष्यतीति॥ अयमाशयः—जातिपदार्थपक्षे—गोपदेन गोत्वमात्रमभिधीयते। शुक्लपदं तु तदेकवाक्यभूतं सत् तस्यैव शुक्लगुणानुरागं प्रतिपादयतीति संसर्गो वाक्यार्थः। व्यक्तिपदार्थपक्षे गोपदेनैव शुक्लकृष्णादिव्यक्तिषु सर्वास्वभिहितासु शुक्लपदं शुक्लसंसर्गं प्रतिपादयदपि आनर्थक्यात् कृष्णादिव्यवच्छेदेनैव विशेषणं भवतीति भेदो वाक्यार्थ इति॥ तन्नेति॥ अपवर्तेतेति॥ निरपेक्षकण्ठरवरूपश्रुत्यपेक्षया समभिव्याहारलक्षणं वाक्यं दुर्बलमिति श्रुतिलिङ्गेति न्यायसिद्धमिति भावः॥

कृत्रिमत्वे युक्तिमप्याह—पदसंघाता इति॥ पौरुषेयत्वे अतीन्द्रियार्थे पुरुषस्याप्तिः नास्ति। अनाप्तवाक्यं त्वप्रमाणमेवेति पूर्वपक्षसूत्रभाष्यार्थः॥

तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् ॥ २९ ॥

तेष्वेव पदार्थेषु भूताना वर्तमानानां पदाना क्रियार्थेन समुच्चारणम्, नानपेक्ष्य पदार्थान् पार्थगर्थ्येन वाक्य अर्थान्तर-प्रसिद्धम् । कुत ? प्रमाणाभावात्, न किंचन प्रमाणमस्ति येन प्रमिमीमहे । न ह्यनपेक्षितपदार्थस्य वाक्यान्त्यवर्णस्य पूर्ववर्णजनितसंस्कारसहितस्य शक्तिरस्ति पदार्थेभ्योऽर्थान्तरे वर्तितुमिति ॥

नन्वर्थापत्तिरस्ति, यत्, पदार्थव्यतिरिक्तमर्थमवगच्छाम' । नच शक्तिमन्तरेण तदवकल्पते इति॥ तन्न- अर्थस्य तन्निमित्तत्वात् । भवेदर्थापत्ति', यद्यसत्यामपि शक्तौ नान्यत् निमित्तमवकल्पेत, अवगम्यते तु निमित्तम् । किम् ? पदार्था , पदानि हि स्वस्व

यद्यपि वाक्य न साक्षाद्वाक्यार्थस्य वाचकम्, नापि पदानि तथापि पदार्था पदै प्रत्यायिता आकाङ्क्षायोग्यतासत्तिसनाथा नियतानन्तर्योन्मूल भविष्यन्ति, तद्द्वारेण पदानामपि सहताना लब्धवाक्यव्यपदेशानां तन्मूलत्वमनुमन्यामह इत्यभिप्रेत्य सिद्धान्तमाह— तद्भूतानामिति ॥

तेष्विति ॥ लोकप्रसिद्धेष्वित्यर्थ । क्रियार्थेन क्रियावाचकपदेन । समाम्नायपदाथस्समुच्चारणम् । पार्थगर्थ्येन पृथक्त्वेन न प्रसिद्धमित्यन्वय. । तेन पृथक्त्वनिराकरणेन "तस्मात्समुदायस्यार्थ " इति दोषो दूषित ॥ "यदि वाक्येऽन्त्यो वर्णः" इत्युक्तशङ्कामपाकरोति—न ह्यनपेक्षितेति ॥

प्रमाणाभावमाक्षिपति—नन्वर्थापत्तिरस्तीति ॥ अवगत्यन्यथानुपपत्त्या शक्ति. तरूप्यते इति भावः । पदार्थैरन्यथोपपत्तिमाह—

पदार्थमभिधाय निवृत्तव्यापाराणि । अथेदानीं पदार्था अवगतास्सन्तो वाक्यार्थं गमयन्ति । कथम्—यत्र हि शुक्ल इति वा कृष्ण इति वा गुणः प्रतीतो भवति, भवति खल्वसावल गुणवति प्रत्ययमाधातुम् । तेन गुणवति प्रत्ययमिच्छन्त केवल गुणवचनमुच्चारयन्ति । मपत्स्यत एतेषा यथासङ्कल्पितोऽभिप्राय. । भविष्यति विशिष्टार्थसंप्रत्ययः । विशिष्टार्थसंप्रत्ययश्च वाक्यार्थ । एवंचेदवगम्यते अन्यत एव वाक्यार्थः ; नतः को जातुचित् अदृष्टा पदसमुदायस्य शक्तिरर्थादवगम्यते इति वदिष्यति ॥

अपिचान्वयव्यतिरेकाभ्यामेतदवगम्यते भवति हि कदाचित् इयमवस्था—मानमादप्याघातात् यद्युच्चरितेभ्य पदेभ्य

तत्रेति ॥ अनेन सूत्रशेषो व्याख्यात । निवृत्तव्यापाराणीति ॥ प्रशान्ताभिधाव्यापाराणीत्यर्थ । सिद्धे पदार्थाना शाब्दत्वे तद्द्वारेण वाक्यार्थस्यापि शाब्दत्व सिध्यति । तत्परत्वाच्च पदानाम् । वाक्यार्थे हि पदाना तात्पर्यं न पदार्थेषु । तेषा प्रमाणान्तरसिद्धत्वात् । अतो यद्यप्यभिधाव्यापार पदार्थेष्वेव पर्यवसित । तथापि तात्पर्यवृत्तेरपर्यवसितायाः वाक्यार्थपर्यन्तत्वात् नाशाब्दत्वशङ्केति भाव. । अलम् समर्थ इत्यर्थ. । विशिष्टार्थसप्रत्यय इति ॥ सामान्य विशेषेण विना नोपपद्यते, ततश्च नासबन्धो नापि पृथग्भूत इति भाव. । विशदयति—एव चेदिति ॥ अन्यतः पदार्थेभ्य. । क इति ॥ वदिष्यतीत्यत्रान्वय. । समुदायशक्तिकल्पनाया अन्यथासिद्धेरिति भाव ॥

पदार्थाना मूलत्वे नैयत्य प्रदर्शयति—अपिचान्वयेति ॥ अवस्था दशा । आघात. अपचारः व्यासङ्ग इति यावत् । नियोगत

न पदार्था अवधार्यन्ते तदानीं नियोगतो वाक्याच नावगच्छेयुः यद्यस्यापार्थगर्थ्यं अभविष्यत्। नियोगतस्तु नावगच्छन्ति ॥

अपि चान्तरेणापि पदोच्चारणं यः शौक्ल्यमवगच्छति अवगच्छत्येवासौ शुक्लगुणकम्। तस्मात्पदार्थप्रत्यये एव वाक्यार्थः नास्य पदसमुदायेन संबन्धः ॥

नियमेन। अस्य वाक्यार्थस्य। अपार्थगर्थ्यं अभेदः। ततश्च वाक्यान्वयेऽपि पदार्थाद्व्यतिरिच्यमानो वाक्यार्थः पदार्थनिमित्त इति सिद्धं भवति ॥

यस्तु वदति वाक्यमप्यत्र न गृहीतमिति तस्योत्तरम्—अपि चान्तरेणापीति ॥ पदार्थप्रत्यये एवेति ॥ वाक्यव्यतिरेकेऽपि पदार्थान्वयेऽन्वीयमानो वाक्यर्थः पदार्थनिमित्त एव। ततश्च संविद्विरुद्धं वाक्याग्रहणमुत्तरम् ॥ अत एव—

पश्यतः श्वेतमारूपं हेषाशब्दं च शृण्वतः।
खुरविक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीः ॥

इति। श्वेतं कंचित्पदार्थं आरूपं अव्यक्तं गवाश्वादिरूपं दूरे उपलभमानः तस्मिन्नेव प्रदेशे हेषया खुरशब्देन च अश्वजातिं गतिं चानुमिमानः अनुपलब्ध्या च तस्मिन् प्रदेशे वस्त्वन्तराणामभावं अवगच्छन् गुणजातिक्रियाणां अर्थान्तरान्वयमपेक्षमाणानां योग्यानां अर्थापत्त्या परस्परं संसर्गं बुध्यते श्वेतोऽश्वो धावतीति। तदिह क्लृप्तं तावत् पदार्थानामाकांक्षायोग्यतासंनिधिवशेन सामान्यतोऽन्वयबोधनं तद्विशेषनियमस्त्वर्थापत्त्या कल्पनीयः। गामानयेत्यादौ त्वेकवाक्यतयैव तन्नियम इत्येतावत्कल्प्यम्। वाक्यशक्तिपक्षे तु सर्वमेव कल्प्यमिति वाक्या-

यत्तु श्रौतः पदार्थं न वाक्यानुरोधेन कुतश्चिद्विशेषादपवर्तितुमर्हतीति। सत्यमेवमेतत्। यत्र केवलः पदार्थः प्रयुज्यमानः प्रयोजनाभावादनर्थकस्संजायते इत्यवगतं भवति तत्र वाक्यार्थोऽपि तावद्भवत्विति विशिष्टार्थताऽवगम्यते न सर्वत्र। एवञ्च सति "शुक्ल इत्यादौ गुणान्तरप्रतिषेधो न शब्दार्थः" इत्येतदपि परिहृतं भवति। अपिच प्रातिपदिकादुच्चरन्ती द्वितीयादिविभक्तिः। प्रातिपदिकार्थो विशेषक इत्याह। सा च विशेषश्रुतिः सामान्यश्रुतिं बाधेत। यच्च "एते पदसंघाताः पुरुषकृता दृश्यन्ते" इति। परिहृतं तत् अस्मरणादिभिः। अपिचैवंजातीयकेऽर्थे वाक्यानि सहन्तु न किंचन पुरुषाणां बीजमस्ति॥

ग्रहणं नोत्तरमिति साराशः॥

अनुपपत्तीरनूद्य परिहरति—यत्त्विति॥ सत्यमित्यर्धाङ्गीकारः। वस्तुतस्तु—श्रुतिविरोध एव नास्ति, यतः श्रुता जातिः लक्षिता वा व्यक्तिः न बाध्यते। कीदृशी गौरानेतव्येति संशये परं बाध्यते इत्याशयेनाह-एतदपि परिहृतमिति॥ यदिदं सामान्यतः प्रसरन्त्याः श्रुतेः विशेषेऽवस्थापनं तदपि क्वचिद्विशेषश्रुतिवेलायामेव विशेषावगमात्, सामान्यश्रुतिरलब्धात्मिकैवेत्याह-अपिच प्रातिपदिकादिति॥ उच्चरन्ती वर्तमानेत्यर्थः। तत्र प्रकृत्यर्थानुरक्तकर्मत्वादिबुद्धिरेव केवलाप्रयोगात्सदानुभूयत इति भावः। सा चेति॥ विभक्तिरित्यर्थः। पदसंघाताः खल्वेते इत्यनुमानं कर्तृस्मरणलक्षणेनोपाधिना दूषितमित्याह—यच्चैते इति॥ चोदनासूत्रे नैवंजातीयकेष्वर्थेषु पुरुषवचनं प्रामाण्यमुपैतीत्युक्तं स्मारयति—अपिचैवमिति॥

लोके सन्नियमात्प्रयोगसन्निकर्षस्स्यात् ॥ २६ ॥

लौकिकेषु पुनरर्थेषु प्रत्यक्षेणार्थमुपलभ्य सन्नियम सन्नि बन्धनं शक्यं तत्र महन्तुम्, एवजातीयकानि वाक्यानि–नीलोत्पलवनेष्वच्येति ॥

तस्मात् "अग्निहोत्र जुहुयात स्वर्गकाम" इत्येतेभ्य एव पदेभ्य लोके येऽर्थो अवगता तेभ्य एतदवगम्यते अग्निहोत्रात्स्वर्गो भवतीति पदेभ्य एव पदार्थप्रत्ययः पदार्थेभ्यो वाक्यार्थप्रत्यय इति ॥

अथैतस्यार्थस्य प्रत्युदाहरण सूत्रम्—लोके इति ॥ सान्नियमात् सति प्रमाणान्तरेणार्थेऽवगते सति नियम वाक्यसहननम् । ततश्च सिद्ध॰ पुरुषसबन्ध प्रयोगस्य । वक्ष्यते चैतत् "लोके कर्मार्थलक्षणम्" इति भाव ॥

वाक्यार्थप्रत्यय इति ॥ अयमाशय —क्रियार्थेन समाम्नाय इत्यनेन वाक्यप्रयोगस्य सप्रयोजनत्वमभिमतम् । पदानि तावत् पदार्थप्रतिपादन यद्यपि कुर्वन्ति । तस्मिन् प्रतिपादने पर्यवसानेऽनुपयोगात् प्रयोजनभूनेऽर्थे पर्यवसान वाच्यम् । स चार्थ स्वर्गादि । सोऽपि भाव्येवेति तन्निष्ठो भावकव्यापार भावनैव । स एव हि वाक्यार्थ. । तदाह—

न हि प्रयोजनापेत वाक्यमुच्चार्यते क्वचित् ।
प्रयोजनक्षम नापि पदमाख्यातवर्जितम् ॥

इति ॥ अयमत्र क्रम – स्वर्गकामो यजेतेत्यत्र धातोरुपरितने अख्यातप्रत्यये रूपद्वयमस्ति लिङ्त्वमाख्यातत्व चेति । आद्येन रूपेणाय प्रत्यय शब्दभावना अभिधाभावनापरपर्याया प्रेरणाप्रवर्तनादिपदवाच्यां

अभिधत्ते। यागहोमादिविषयकप्रवृत्तिहेतुत्वात्प्रवर्तनादिपदवाच्या भवति। भावना नाम भवितुर्भवनानुकूलो भावयितुर्व्यापार । शब्दभावना नाम पुरुषप्रवृत्त्यनुकूलो व्यापारविशेष । स एव प्रत्यय द्वितीयेन रूपेणार्थभावनामभिधत्ते । अर्थभावना नाम प्रयोजनेच्छाजनितक्रियाविषयकव्यापार. ॥

भावनाया किं केन कथमित्याकाक्षात्रयमस्ति, किं भावयेत् केन भावयेत् कथ भावयेदिति। तत्रार्थभावनाभाव्यिका लिङादिज्ञानकरणिका अर्थवादजनितप्राशस्त्यज्ञानेतिकर्तव्यताका इति शाब्दी भावना त्र्यशा भवति । स्वर्गादिभाव्यिका यागादिकरणिका प्रयाजादीतिकर्तव्यताका आर्थी भावना प्रजायते। अर्थभावनाया एव प्रयोजनरूपत्वान्मुख्यत्व, ततश्च प्रयोज्यतासबन्धेन शब्दभावनाविशिष्टा त्र्यशा आर्थी भावनेति बोधो जायते। प्रयोज्यत्व च स्वविषयकज्ञानजन्यानुमितिजन्यत्वम्। अनुमितिश्च याग इष्टसाधनमित्येवरूपा। यद्यत्प्रेरणाविषय तत्तादिष्ट-साधनमिति व्याप्ते । विधयो हि स्वप्रवर्तकत्वनिर्वाहार्थं विधेयस्य यागादेः श्रेयस्साधनत्वमाक्षिपन्त पुरुष तत्र प्रवर्तयन्ति। तथाच श्रेयस्साधनत्वरूप धर्मत्वमेवमनेन वाक्येन ज्ञायत इति सम्प्रदाय· ॥

तत्र शब्दभावनास्वरूप किमित्यपेक्षाया प्रैषादिरूपस्य वक्त्रभिप्रायस्य अपौरुषेये वेदे वक्तुमयोगात् शब्दनिष्ठ एव कश्चित् व्यापारः कल्प्यते। अत एवाभिधापदवाच्यशब्दव्यापाररूपत्वेन अभिधा-भावनेति व्यवह्रियते ॥

अन्ये तु—धात्वर्थगतमिष्टसाधनत्वमेव शब्दभावनास्वरूपमाहुः मण्डनमिश्रानुयायिनः। तदेतदिष्टसाधनत्व प्रवर्तकत्वात् प्रवर्तनात्वेन रूपेण विध्यर्थ । एवच विधिशब्दस्यान्यनिष्ठव्यापारबोधकत्व लोक-सिद्ध रक्षित भवति। अभिधाभावनेति व्यवहारस्तु अभिधीयते या

सा अभिधा समीहितसाधनता सैव प्रवर्तनात्वेन अभिहिता पुरुषप्रवृत्तिं भावयतीति भावना इति व्युत्पत्त्या युज्यते इत्याहु । यथाऽऽहुश्च—

पुसा नेष्टाभ्युपायत्वात्क्रियास्वन्य. प्रवर्तक ।
प्रवृत्तिहेतु धर्मं च प्रवदन्ति प्रवर्तनाम् ॥

इति । अस्मिन् मते साक्षादेव श्रेयस्साधनत्वरूपधर्मावगम इति निरवद्यम् ॥

सैव ह्यार्थी भावना कृतिप्रयत्नादिपदाभिधेया आख्यातवाच्या । गौश्शुक्लेत्यादावपि आनीयतामित्यादिकमध्याह्रियते । तथाचानेकपदार्थानुरक्तरूपेणासौ वाक्यार्थ न स्वरूपमात्रेण । अतः पदार्था एव पदार्थान्तरान्वयावस्थाभेदभिन्ना वाक्यार्थ । न त्वतोऽन्योऽनन्यो वा । ते च पदार्था· प्रत्येकपदजनितपदार्थबुद्धिजन्यविचित्रसस्कारसमूहजन्याया स्मृतावेकस्या युगपत्सन्निहिताः सर्वविशेषणावीशिष्टभावनाबुद्धिं जनयन्तीति । अयमभिहितान्वयवाद ॥ तत्सग्रहस्तु—

पदमभ्याधिकाभावात् स्मारकान्न विशिष्यते ।
यदाधिक्य भवेत्किंचित् तत्पदस्य न गोचरः ॥
अत एव हि वाक्यार्थ एषा लाक्षणिको मत ।
यस्मादभिहितैरर्थै. सबन्धात्सोऽवगम्यते ॥

इति । अन्विताभिधानवादिनस्त्वेवमाहुः—

पदजात श्रुतं सर्वं स्मारितानन्वितार्थकम् ।
न्यायसपादितव्यक्ति पश्चाद्वाक्यार्थबोधकम् ॥

इति । अयमर्थ —पदानि तावत श्रूयन्ते । श्रुतानि च व्युत्पत्त्यनुसारेण पदार्थस्वरूपाणि परस्परानन्वितानि स्मारयन्ति । स्मृतेषु च

पदार्थेषु आकाङ्क्षादिपरामर्शः । तत्रैव न्यायप्रवृत्तिः । तया च वचनव्यक्तिविशेषाभिव्यक्तिस्सम्पाद्यते । ततस्सम्यङ्न्यायानुगृहीतानि पदानि नानापदार्थविशिष्टैकप्रधानपदार्थात्मकं वाक्यार्थमभिदधतीति । तन्मते हि प्राभाकरसम्मते भावनाख्यः नियोगरूपं कार्यमेव धर्मपदवाच्यं विध्यर्थः प्रधानभूतः । विस्तरस्तु मानमेयरहस्यश्लोकवार्तिके वाक्यार्थवादे द्रष्टव्यः ॥

"तस्मात्समुदायस्यार्थे कृत्रिमो व्यामोहो वा" इत्युक्तव्यामोहवादिनामयमाशयः—वर्णपदातिरिक्तबहिर्भूतवाक्याभावात् वाक्याकारा बुद्धिरेव वाक्यं, तदनन्तरं चानेकजातिगुणद्रव्यक्रियासंसर्गाभासात् जायमाना बुद्धिरेव वाक्यार्थः, न बाह्यः । पदार्थातिरेकेणानतिरेकेण वा निरूपणासंभवादिति । सोऽयं प्रतिभावाक्यार्थन्यायः । स च निरालम्बनवादेनैव निराकृत इति नात्र प्रतनितः ॥

वैयाकरणास्तु बाह्यमेव निर्भागं वाक्यं वाक्यार्थं च मन्यन्ते । निरवयवत्वेऽपि वाक्यानामवयवप्रतिभासे प्रत्यभिज्ञाया च सादृश्यं कारणमुच्यते । "ध्वनयस्सदृशात्मानो विपर्यासस्य कारणम्" इति ॥ अयमर्थः—नानाजातीयानेकध्वनिव्यङ्ग्यं हि वाक्यम् । ते च ध्वनयः प्रत्येकं वाक्यान्तरव्यञ्जकध्वनिसदृशाः निर्भागस्यापि वाक्यस्य तत्तद्वाक्यसादृश्यं नृसिंहस्येव केनचिद्भागेन नरसादृश्यं केनचिच्च सिंहसादृश्यं भागशः संपादयन्तः सादृश्योपाधिभेदादवयवभेदमिव वाक्ये दर्शयन्ति । ध्वनिसादृश्यादेव अवयवानामपि सादृश्यात् प्रत्यभिज्ञापि भवतीति ॥ शिष्टं स्पष्टं स्फोटवादे ॥

तत्रमुख्यावयवाप्रसिद्ध्या सादृश्यं दुर्वचमिति दूषणम् । सतां हि सद्भिस्सादृश्यमसादृश्यं चेति ॥

शब्दविवर्तवादिनश्शाब्दिकाः केचिदेवमाहुः—निर्भागमेव वाक्य

## अपौरुषेयताधिकरणम्

वेदाश्चैके संनिकर्षं पुरुषाख्याः ॥ २७ ॥

उक्तं चोदनालक्षणोऽर्थो धर्म इति, यतो न पुरुषकृतः शब्दस्यार्थेन संबन्धः । तत्र पदवाक्याश्रय आक्षेप परिहृत । इदानीमन्यथाऽऽक्षेप्स्याम.—पौरुषेयाश्चोदना इति वदाम. । सन्निकृष्टकालाः कृतका वेदा इदानीतनाः, ते च चोदनानां समूह । तत्र पौरुषेयाश्चेद्वेदा' असंशय पौरुषेयाश्चोदना । कथं पुनः कृतका वेदा इति केचिन्मन्यन्ते? यत. पुरुषाख्या. पुरुषेण हि समाख्यायन्ते वेदाः काठकं कालापकं पैप्पलादकं मौद्गलमिति । न हि सबन्धादृते समाख्यानम् । नच पुरुषस्य शब्देनास्ति संबन्धः अन्यतः कर्ता पुरुषः कार्य

वाक्यार्थात्मना विवर्तमान वाक्यार्थे नार्थान्तरामिति ॥ तथाचेत् शब्देन सहाभेदरूपेण शुक्तिकारजतादिबुद्धिवत् अर्थबुद्धिरास्थेया । सा च संविद्विरुद्धेति दोष ॥

निषेधेषु यदि रागादिप्राप्त विध्यर्थं कर्तव्यत्व लिङाऽनूद्य नञा तन्निषेध, यदि वा नञर्थनिषेधस्य वर्जनस्य लिङा विधि.- द्वेधापि अनुष्ठानस्यानिष्टसाधनत्वकल्पनात् समभवत्यननुष्ठानसकल्पजननेन निवारणमिति ॥ आम्नायस्य क्रियार्थत्वादित्यत्राम्नायपद धर्मप्रमाणाम्नायपरम् । नातो निषेधस्थले क्रियार्थत्वाभावेऽप्यनुपपत्तिरित्यपि वदन्ति ॥

सन्निकृष्टेति ॥ सन्निकर्षं सामीप्य, तच्च कालतोऽत्र विवक्षितमिति भाव. । समाख्या यौगिकी शक्तिः । तया प्रयोग. स्फुट एव । अन्यतः अतिरिक्त । कर्तृकर्तव्यतालक्षण एव

शब्द इति । ननु प्रवचनलक्षणा समाख्या स्यात् । नेति ब्रूमः—असाधारणं हि विशेषणं भवति । एक एव हि कर्ता बहवोऽपि प्रब्रूयुः । अतोऽस्मर्यमाणोऽपि चोदनायाः कर्ता स्यात् । तस्मात् न प्रमाण चोदनालक्षणोऽर्थो धर्म इति ॥

अनित्यदर्शनाच्च ॥ २८ ॥

जननमरणवन्तश्च पुरुषा वेदार्थाः श्रूयन्ते—"बबरः प्रावाहणिरकामयत, कुसुरुविन्दः औद्दालकिरकामयत" इत्येव मादय । उद्दालकस्यापत्यं गम्यते औद्दालकि । यद्येवं प्रागौद्दालकिजन्मनः नाय ग्रन्थो भूतपूर्वः एवमप्यनित्यता ॥

उक्तं तु शब्दपूर्वत्वम् ॥ २९ ॥

उक्तमस्माभि शब्दपूर्वत्वमध्येतॄणाम् । केवलमाक्षेपपरिहारो वक्तव्यस्सोऽभिधीयते ॥

आख्या प्रवचनात् ॥ ३० ॥

यदुक्त कर्तृलक्षणा समाख्या काठकाद्येति । तदुच्यते—नेयमर्थापत्तिः, अकर्तृभिरपि ह्येनामाचक्षीरन् । प्रकर्षेण वचनं

संबन्ध इत्यर्थ । एवंच वाक्यत्वं रचनायत्त, रचना च कठादिकर्तृकेति अप्रमाणं चोदना इति ॥

अनित्येति ॥ अनित्याभिधायिस्वरूपादेव अनपेक्षत्वसूत्रोक्तन्यायेन अनित्याश्चोदना इति भाव ॥

नेयमर्थापत्तिरिति ॥ नानन्यथासिद्धा युक्तिरित्यर्थः । अकर्तृभिरपीति ॥ कर्तृत्वेपि प्रवर्तते प्रवक्तृत्वेपि प्रवर्तेत इत्यर्थः । प्रकर्षस्योदाहरण—स्मर्यतेचेति ॥

अनन्यसाधारणं कठादिभिरनुष्ठितं स्यात्, तथापि हि समाख्यातारो जना भवन्ति। स्मर्यते च "वैशपायनस्सर्वशाखाध्यायी। कठः पुनरिमां केवलां शाखामध्यापयाबभूव" इति॥ स बहुशाखाध्यायिना सन्निधौ एकशाखाध्यायी अन्यां शाखामनधीयानः तस्यां प्रकृष्टत्वादसाधारणमुपपद्यते विशेषणम्॥

पर तु श्रुतिसामान्यमात्रम्॥ ३१॥

यच्च प्रावाहणिरिति, तन्न—प्रवाहणस्य पुरुषस्यासिद्धत्वात् न प्रवाहणस्यापत्यं प्रावाहणिः। प्रशब्दः प्रकर्षे सिद्धः। वहति श्च प्रापणे। न त्वस्य समुदायः कश्चित्सिद्धः। इकारस्तु यथैवापत्ये सिद्धः, तथा क्रियाया अपि कर्तरि। तस्मात् यः प्रवाहयति स प्रावाहणिः। बबर इति शब्दानुकृतिः। तेन यो नित्योऽर्थः तमेवैतौ शब्दौ वदिष्यतः। अत उक्तं—पर तु श्रुतिसामान्यमात्रमिति॥

कृते वा विनियोगस्स्यात् कर्मणस्संबन्धात्॥ ३२॥

अथ कथमवगम्यते नायमुन्मत्तबालवाक्यसदृश इति। तथा हि पश्यामः—"वनस्पतयस्सत्रमासत, सर्पास्सत्रमासत" इति। यथा—"जरद्गवो गायति मद्रकाणि"। कथं नाम जरद्गवो गायेत्। कथं वा वनस्पतयः सर्पा वा सत्रमासीरन्निति॥

उच्यते—विनियुक्तं हि दृश्यते परस्परेण संबन्धार्थम्।

पर तु इति॥ अनित्यार्थाभिधायित्वरूपं लिङ्गं तु श्रुतिसामान्यमात्रं, प्रावाहण्यादिशब्दो न व्यक्तिवचनः किंत्वाकृतिवचनः। ततो निरस्तमिति भावः। तदाह—तेन य इति॥

विनियुक्तमिति॥ पदजातमिति शेषः। सौत्रविनियोगपद-

कथम्? ज्योतिष्टोम इत्यभिधाय कर्तव्य इत्युच्यते। केनेत्याकाङ्क्षिते सोमेनेति। किमर्थमिति? स्वर्गायेति। कथमिति? इत्थमनया इतिकर्तव्यतया इति। एवमवगच्छन्तः पदार्थैरेभिस्संस्कृतं पिण्डितं वाक्यार्थं कथमुन्मत्तबालवाक्यसदृशमिति वक्ष्यामः॥

नन्वनुपपन्नमिदं दृश्यते वनस्पतयस्सत्रमासतेत्यादि। नानुपपन्नं—नानेनाग्निहोत्रं जुहुयात्स्वर्गकामः" इत्यादयोऽनुपपन्नास्स्युः। अपि च "वनस्पतयस्सत्रमासत" इत्येवमादयोऽपि नानुपपन्नाः, स्तुतयो ह्येतास्सत्रस्य। वनस्पतयो नामाचेतना इदं सत्रमुपासितवन्तः, किं पुनः विद्वांसो ब्राह्मणाः। तद्यथा लोके—संध्यायां मृगा अपि न चरन्ति किं पुनर्विद्वांसो ब्राह्मणाः इति। अपिचाविगीतस्सुहृदुपदेशः सुप्रतिष्ठितः कथमिवाशङ्क्येत उन्मत्तबालवाक्यसदृश इति। तस्माच्चोदनालक्षणोऽर्थो धर्म इति सिद्धम्॥

इत्याचार्यशबरस्वामिनः कृतौ मीमांसाभाष्ये
प्रथमस्याध्यायस्य प्रथमः पादः
तर्कपादस्समाप्तः

---

लभ्योऽर्थ एष। तथाचायं सूत्रार्थः—कृते कर्मणि ज्योतिष्टोमादिके अभिहिते तदाकाङ्क्षिततया समभिव्याहृतपदजातस्य विनियोगस्समन्वयस्स्यादेव। कर्मणः संबन्धात् साकाङ्क्षत्वादिति॥ भावनावाक्यार्थवादस्य इदमेव भाष्यं मूलमिति ध्येयम्॥

आचार्यशबरस्वामिभाष्येऽस्मिन्नाद्यलक्षणे ।
तर्कपादे विवरण नाम्नाऽऽसीत् भाष्यभूषणम् ॥
इत्थ कस्तूरिरंगेन्द्रकृपात्तमतिवैभव ।
लक्ष्मीपुर श्रीनिवास व्यलिखत् भाष्यभूषणम् ॥
प्रीयता भगवान् वासुदेव सर्वतनुर्यत ।
स्वार्थ परार्थमपिच सुनिष्पन्नोऽयमुद्यम' ॥

इति श्रीवत्सकुलकलशजलनिधिकौस्तुभायमान श्रीवेङ्कटार्यतनूभवस्य ताताम्बागर्भशुक्तिमुक्ताफलायमानस्य श्रीमत्कस्तूरिरङ्गनाथविद्वन्मणिकरुणाकटाक्षसमासादितसारस्वत सर्वस्वस्य श्रीमाद्विराकिराघवार्यचरणानुगृहीतसकलसंप्रदायरहस्यस्य श्रीमद्राजाधिराज महीशूर महीधुर्यतुर्य श्रीकृष्णराज सार्वभौमपरिपोषितस्य महामहोपाध्याय पण्डितरत्नाद्यनेक बिरुदालकृतस्य श्रीमतो लक्ष्मीपुराभिजनस्य श्रीनिवासाचार्यस्य कृतिषु आचार्यशबरस्वामिभाष्यस्य तर्कपादस्य व्याख्यान मीमांसा भाष्यभूषणं सम्पूर्णम्.

---

श्रीवासुदेवः प्रीयताम्.

# क्रय्यसंस्कृतपुस्तकानि.

| | | |
|---|---|---|
| संस्कृतबालशिक्षा | ० | ३ |
| सरस्वतीप्रार्थना, श्यामला दण्डक, नवरत्नमालाच | ० | २ |
| शब्दमञ्जरी (दृढपत्रात्मिका) | ० | ६ |
| यजुर्वेदसन्ध्यावन्दनम् | ० | २ |
| आदित्यहृदयम् | ० | १ |
| महाकवि बोधायनकृत-भगवदज्जुकनाटकम् | ० | ६ |
| शिवानन्दलहरी | ० | २ |
| रुद्रनमकचमकम् | ० | २ |
| सौन्दर्यलहरी | ० | [illegible] |
| पञ्चसूक्तानि | ० | २ |
| रामकर्णामृतम् | ० | ८ |
| बालरामायणम् | ० | २ |
| विवेकचूडामणि | ० | ८ |
| कृष्णकर्णामृतम् | ० | ६ |
| ,, आंग्लवादासहितम् | १ | ८ |
| शिवकवचम् | ० | २ |
| यजुर्वेदाह्निकम् | ० | ६ |
| श्रीवैष्णवाह्निकम् | ० | ८ |
| सूर्यनमस्कारमन्त्रा त्र्युच-ब्रह्मयज्ञचाहिनास्सस्व·ाश्च | ० | १ |
| लक्ष्मीनृसिंहस्तोत्रम् | ० | १ |
| श्रीगोविन्दद्वादश (चतुर्दश) मञ्जरिकास्तोत्रम् | ० | १ |
| मुकुन्दमाला | ० | १ |
| हिन्दी बालशिक्षा | ० | ३ |
| हिन्दी प्रथमवाचकम् | ० | ८ |
| भर्तृहरिशतकत्रय, मूलम् | ० | ८ |
| विक्रमार्कचरित्रम् | ० | १० |
| संस्कृतान्ध्रवर्णबोधिनी, पत्रफलका | ० | २ |
| श्रीलक्ष्मीनारायणहृदय | ० | ३ |
| ब्रह्मसूत्राणि, मूलम् | ० | ३ |

॥ नामावळीसहितानि ॥

| | | |
|---|---|---|
| विष्णुसहस्रनामस्तोत्रम् | ० | ४ |
| ललितासहस्रनामस्तोत्रम् | ० | ६ |
| लक्ष्मीसहस्रनामस्तोत्रम् | ० | ४ |
| सुब्रह्मण्यसहस्रनामस्तोत्र | ० | ४ |
| शिवसहस्रनामस्तोत्रम् | ० | ४ |
| वेङ्कटेशस्तोत्रम् | ० | ४ |
| अन्नपूर्णासहस्रनामस्तोत्र | ० | ४ |
| आञ्जनेयसहस्रनामस्तोत्र | ० | ४ |
| गणपतिसहस्रनामस्तोत्र | ० | ४ |

वाविळ. रामस्वामिशास्त्रिलु अण्ड् सन्स्,
२९२, एस्प्लनेड् चेन्नपुरी

# ವಿಶೇಷ ಸೂಚನಾ.

---

1 ಮಹಾಪಾಠಶಾಲೆಯ ಪಂಚಾಶತ್ಸಂವತ್ಸರ ಮಹೋತ್ಸವದ ಜ್ಞಾಪಕಾರ್ಥವಾದ ಸಂಚಿಕೆಯು ಪ್ರತ್ಯೇಕ ಬಿಕರಿಗೆ ಸಿದ್ಧವಾಗಿದೆ ಸುಂದರವಾದ ಐದು ಭಾವಚಿತ್ರಗಳಿಂದಲಂಕೃತವಾಗಿ ಉತ್ತಮವಾದ ಕಾಗದದಲ್ಲಿ ಮುದ್ರಿತವಾಗಿರುವುದರಿಂದಲೂ, ಉದ್ದಾಮ ಪಂಡಿತರಿಂದ ರಚಿತಗಳಾದ ಉಪನ್ಯಾಸಗಳಿಂದ ಭರಿತವಾಗಿರುವುದರಿಂದಲೂ, ಸರ್ವರೂ ಗ್ರಹಿಸತಕ್ಕದಾಗಿದೆ ಕೆಲವು ಪ್ರತಿಗಳು ಮಾತ್ರ ಉಳಿದಿರುವುದರಿಂದ ಇಷ್ಟವುಳ್ಳವರು ಶೀಘ್ರದಲ್ಲಿಯೇ ಕೆಳಗಿನ ವಿಳಾಸಕ್ಕೆ ಬರೆದು ಪಡೆಯಬಹುದು ಬೆಲೆ ಎಂಟಾಣೆ, ಅಂಚೆ ವೆಚ್ಚ ಎರಡಾಣೆ

2 ಇದುವರೆಗೂ ನಮ್ಮ ಪತ್ರಿಕೆಗೆ ಚಂದಾದಾರರಾಗುವುದರ ಮೂಲಕ ಪ್ರೋತ್ಸಾಹಕೊಟ್ಟ ಮಹನೀಯರಿಗೆ ಬಹಳ ಕೃತಜ್ಞರಾಗಿದ್ದೇವೆ ಮುಂದೆಯೂ ಹೀಗೆಯೇ ಸಹಾಯಮಾಡಿ, ಕ್ಷೀಣದಶೆಗೆ ಬರುತ್ತಿರುವ ಗೀರ್ವಾಣ ವಿದ್ಯೆಯನ್ನು ಕೈಲಾದಷ್ಟು ಉದ್ಧಾರಮಾಡಬೇಕಾಗಿ ಪ್ರಾರ್ಥನೆ

3 ಮುಂದಿನ ಅಂದರೆ ಏಪ್ರಿಲ್ ಸಂಚಿಕೆಯನ್ನು ವಿ ಪಿ ಮೂಲಕ ಕಳುಹಿಸಲಾಗುತ್ತೆ , ಆದರೆ ಅದಕ್ಕೆ ಮುಂಚೆಯೇ ಕೆಳಗೆ ಕಂಡಂತ ಚಂದಾ ಮೊಬಲಗನ್ನು ಮನಿಯಾರ್ಡರು ಮೂಲಕ ರವಾನಿಸಿದರೆ ಚಂದಾದಾರರಿಗೆ ಸ್ವಲ್ಪಮಟ್ಟಿಗೆ (ಎರಡಾಣೆ) ಉಳಿತಾಯವಾಗುವುದೆಂದು ಸೂಚನೆ

| | | | | | |
|---|---|---|---|---|---|
| ಚಂದಾ— | ಮೈಸೂರು | ದೇಶದೊಳಗೆ | 1 | 8 | 0 |
| ,, | ,, | ಹೊರಗೆ | 1 | 12 | 0 |
| ,, | | ಸೀಮೆಯಲ್ಲಿ | 3 ಷಿಲಿಂಗ್ | | |

ಚಕ್ರವರ್ತಿ ರಾಮಾನುಜಯ್ಯಂಗಾರ್ಯ,

ಅಧ್ಯಕ್ಷ,

ಸಂಸ್ಕೃತ ಮಹಾಪಾಠಶಾಲಾ, ಮೈಸೂರು

श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिकायाः
विनिमयविषयीभूता एता पत्रिकाः

---

१ भडारकर् रिसर्च् इन्स्टिट्यूट् आनल्स्, पूना
२ जर्नल् आफ् ओरियंटल रिसर्च्, मद्रासु
३ प्रबुद्धकर्णाटक, बेंगळूरु
४ मिथिक् सोसैटि जर्नल बेंगळूरु
५ यूनिवर्सिटि यूनियन् म्यागसीन्, मैसूरु
६ एम् टि बि आर्ट्स्कालेजुम्याग्जीयन्, सूरत्.
७ ओरियण्टल् कालेजु म्यागसीन, लाहोर
८ सद्बोधचन्द्रिके, आनन्दवन
९ श्री शारदा, शृंगेरि
१० कादम्बरीसंग्रह, चामराजनगर
११ सनातनधर्मसंजीविनी, मैसूरु
१२ कर्णाटक चन्द्रिके, मैसूरु
१३ उद्यानपत्रिका, तिरुवादि

---

# सूचना.

" मानमेयरहस्यश्लोकवार्तिकम् "

इति नाम कश्चिन्महाप्रबन्ध आनुष्टुभश्लोकरूपेण सगृहीत. सर्वसिद्धान्तसारसग्रहरूप परस्सहस्रविषयविभक्त एतत्पत्रिका-सपादकेन प्रणीत मुद्रित· प्रकाशितश्चास्ति । मूल्यमस्य (६) षट् रूपकाणि प्रापणभृति पृथगेव

उपलब्धिस्थान—पत्रिकासपादक

## ಶ್ರೀ ಮಧ್ವಸಿದ್ಧಾಂತ ಪ್ರಕಾಶಿನೀ (ಮಾಸಪತ್ರಿಕೆ)

ಈ ಪತ್ರಿಕೆಯು ಪ್ರಾರಂಭವಾಗಿ ಒಂಭತ್ತು ವರ್ಷಗಳಾದುವು ಇದರಲ್ಲಿ ಪ್ರಕಟವಾಗತಕ್ಕ ವಿಷಯಗಳು ಅತ್ಯುತ್ಕೃಷ್ಟವಾದುವು ಸರ್ವರಿಗೂ ತಿಳಿಯುವಂತೆ ಕನ್ನಡ ಭಾಷೆಯಲ್ಲಿ ಅನೇಕ ಪಂಡಿತರುಗಳಿಂದ ವಿಷಯಗಳು ಬರಿಯಲ್ಪಡುತ್ತಲಿವೆ ಈ ಪತ್ರಿಕೆಯಂತೆ ನಮ್ಮಲ್ಲಿ ಮತಪ್ರಕಾಶಕವಾದುದು ಮತ್ತಾವುದೂ ಇರುವುದಿಲ್ಲ ಇದರಲ್ಲಿ ಮಧ್ವಮತಕ್ಕೆ ಸಮ್ಬಂಧಿಸಿದ ವಿಷಯಗಳಲ್ಲದೆ, ಇತರ ಮತಗಳ ಪ್ರಮೇಯಗಳೂ, ನೀತಿ, ಧರ್ಮ, ಪುರಾಣೇತಿಹಾಸಗಳಲ್ಲಿ ಕಂಡುಬರುವ ಅನೇಕ ವಿಷಯಗಳೂ ಬರಿಯಲ್ಪಡುತ್ತಲಿವೆ ಈ ಪತ್ರಿಕೆಯನ್ನು ಆದರಿಸುವಂತೆ ಸರ್ವರೂ ಪ್ರಾರ್ಥಿಸಲ್ಪಡುತ್ತಾರೆ

ಇದರ ವಾರ್ಷಿಕಚಂದಾ ರೂ ೨-೪-೦ (ಟಪ್ಪಾಲು ಸಮೇತ) ಪೋಷಕರು ೧ನೇ ತರಗತಿ ರೂ ೧೦-೦-೦ ೨ನೇ ತರಗತಿ ರೂ ೫-೦-೦ ಹಿಂದಿನ ಸಂಪುಟಗಳನ್ನಪೇಕ್ಷಿಸುವವರು ಬರೆದು ತರಿಸಿಕೊಳ್ಳಬಹುದು

ಕೆ ವ್ಯಾಸಾಚಾರ್ಯ, ಬಿ ಎ ,

ಕಾರ್ಯದರ್ಶಿ, ಮಧ್ವಸಿದ್ಧಾಂತ ಪ್ರಕಾಶಿನೀ ಸಭಾ, ಮೈಸೂರು,

# पुस्तकपरिचयः.

## संस्कृतबालादर्श'—संस्कृतप्रथमादर्शश्च

महोपाध्याय पद समलङ्कृतै ब्र॥ K L व्यासरायशास्त्रिभि बालकाना मनायासेन संस्कृतभाषाया प्रवेशसिद्ध्यर्थं विरचितौ संस्कृत-बालादर्श संस्कृतप्रथमादर्शाभिधानौ ग्रन्थविशेषा वामूलाग्र परिशीलितौ बालकाना मप्यत्यन्तानुभव विषयीभूत पदामिश्रै र्वाक्यै स्सकलय्य विरचितः प्रथमो ग्रन्थ पदलिङ्गज्ञानादिक सुसुख जनयति, तत्पठनेन च सर्वेषामपि प्रायश न केवल ज्ञानाभिवृद्धिर्भवति, पर तु गैर्वाण भाषाभ्यासे कौतुक च जायते। अत यदि संस्कृत भाषाभ्यासेऽतिकुतूह-लिन ग्रन्थमिम मापादचूड समधीयीरन्, तदा तेषा मस्या भाषायाम-त्युत्साह उत्पद्यते स्वेष्टार्थसिद्धिश्च सम्यग्भवतीत्यत्र न कोपि विषयलेश-स्याप्यवकाश इति॥

एवमेव द्वितीयोपि पाठनकालेऽनुभूतविद्यार्थिपरिश्रमैः पण्डित्त प्रवरै तच्छ्रमनिवारणोद्देशेन विलिखिताना भाषान्तरीयप्रथमपुस्तका-दीना पद्धतिं नवीनशैलीं चानुहरति। तस्मिंश्च मध्येमध्ये सयोजिताना नीतिमार्गोपदेशकाना सुबोधार्थवता सर्वानुभवविषयपदमिश्राणा पद्यभा-गानामध्ययनेन भाषाभ्यासेऽतिकौतुक पद्याध्यायनेऽनुभूयमानक्लेशादि-परिहारश्च भवति। सर्वसाधारण्येन लोकव्यवहारविषयभूताना पदार्थानां स्वरूपनिरूपकै. प्रश्नोत्तरवाक्यैः इतरवाक्यविशेषैश्च गुम्भितः अय ग्रन्थः सर्वानपि गीर्वाणभाषाध्ययनकुतूहलिन' अनायासेन तद्विशेषपरिचयवतः लेखनभाषणादिष्वतिसमर्थाश्च करोति। अस्यान्त्यभागे चोदाहृता सुबो-धास्सदुपदेशविशिष्टा श्चित्रश्लोका तदध्येतृणा तत्सदृशविषयान्तरानु-सन्धान एव तेषामतिकौतूहलमुत्पाद्य तद्बुद्धिंचात्यन्त विकासयति इत्यस्य

महिमा केवल अनुभवैकशरणैरेव निर्णेतु शक्य । अत अस्सग्रथस्यै-वाध्ययने प्रवृत्तास्सर्वेपि यथारुचि भाषाज्ञानादिकमनायासेन सम्पाद्य सतोषातिशयमवाप्नुयुरिति सुदृढ प्रतीम ।

## शब्दमञ्जरी

पण्डितवरै P S अनन्तनारायणशास्त्रिभिर्विरचिताऽसौ शब्द-मञ्जरी क्रमश. सामान्य कष्टतर कष्टतमशब्दरूपाभ्यासविषये बाल-काना मतीवानुकूल्य परिपोषयति । अस्या चाधोभागे प्रायशस्सर्वत्रोपपा-दिता व्याकरणाशादिविशेषविषया आधुनिकाना गीर्वाणभाषाभ्यासकुतु-किना विद्यार्थिना मतीव साहाय्य कारिण उत्साहजनकाश्च । व्याख्याता श्चास्या अन्त्यभागे तिङन्तसमासप्रकरणादिका तत्तदशेषु विद्यार्थिना सुसुख तत्तद्ज्ञानादिकमुत्पादयन्ति येनच भाषान्तरीयतादृशविषया अपि सुविशदमनायासेन तैर्विज्ञेया भवन्ति । अस्या च विवृता स्सर्वेपि शब्दा यत्किंचिद्वैलक्षण्यमापन्नास्सर्वास्वपि विभक्तिषु प्रायेण प्रदर्शिता इत्ययमप्यशोऽध्येतॄणा मत्यानुकूल्याधायक । तस्मादेव सौख्यापादन-पुरस्सर भाषाज्ञानोपयोगिनीय शब्दमञ्जरी गीर्वाणभाषाध्येतृभिस्सादर यद्यभ्यस्यते तदा ते सर्वेऽपि समधिगतमनोरथास्सम्पद्यन्त इतीय स[c]-विश्वसनीया —

व्याकरणविद्वान्
कृष्णदेशिकाचार्यः.

[तत्र तावत् सस्कृतप्रथमादर्शाभिधानः ग्रन्थ. मैसूरुसस्थान सस्कृत विद्याभिवृद्धिमहासभाधिकारिभि सस्कृत प्रथमकक्ष्याया पाठ्यमानपु-स्तकचयेऽन्तर्भावित इत्येतावदेव किलास्य ग्रन्थस्य विमर्शन स्यात्] ॥सं॥

# क्रय्यसंस्कृतपुस्तकानि.

| | | |
|---|---|---|
| संस्कृतबालशिक्षा | ० | ३ |
| सरस्वतीप्रार्थना, श्यामला दण्डक, नवरत्नमालाच | ० | २ |
| शब्दमञ्जरी (दृढपत्रात्मिका) | ० | ६ |
| यजुर्वेदसन्ध्यावन्दनम् | ० | २ |
| आदित्यहृदयम् | ० | १ |
| महाकवि बोधायनकृत-भगवदज्जुकनाटकम् | ० | ६ |
| शिवानन्दलहरी | ० | २ |
| रुद्रनमकचमकम् | ० | २ |
| सौन्दर्यलहरी | ० | २ |
| पञ्चसूक्तानि | ० | २ |
| रामकर्णामृतम् | ० | ८ |
| बालरामायणम् | ० | २ |
| विवेकचूडामणि | ० | ८ |
| कृष्णकर्णामृतम् | ० | ६ |
| „ आंग्लवादासहितम् | १ | ८ |
| शिवकवचम् | ० | २ |
| यजुर्वेदाह्निकम् | ० | ६ |
| श्रीवैष्णवाह्निकम् | ० | ८ |
| सूर्यनमस्कारमन्त्रा ऋग्युग-ब्रह्मयज्ञसहितास्सस्वराश्च | ० | १ |
| लक्ष्मीनृसिंहस्तोत्रम् | ० | १ |
| श्रीगोविन्दद्वादश (चतुर्दश) मञ्जरिकास्तोत्रम् | ० | १ |
| मुकुन्दमाला | ० | १ |
| हिन्दी बालशिक्षा | ० | ३ |
| हिन्दी प्रथमवाचकम् | ० | ८ |
| भर्तृहरिशतकत्रय मूलम् | ० | ८ |
| विक्रमार्कचरित्रम् | ० | १० |
| संस्कृतान्ध्रवर्णबोधिनी, पत्रफलका | ० | २ |
| श्रीलक्ष्मीनारायणहृदय | ० | ३ |
| ब्रह्मसूत्राणि, मूलम् | ० | ३ |

॥ नामावलीसहितानि ॥

| | | |
|---|---|---|
| विष्णुसहस्रनामस्तोत्रम् | ० | ४ |
| ललितासहस्रनामस्तोत्रम् | ० | ६ |
| लक्ष्मीसहस्रनामस्तोत्रम् | ० | ४ |
| सुब्रह्मण्यसहस्रनामस्तोत्र | ० | [illegible] |
| शिवसहस्रनामस्तोत्रम् | ० | ४ |
| वेङ्कटेशस्तोत्रम् | ० | ४ |
| अन्नपूर्णासहस्रनामस्तोत्रं | ० | ४ |
| आञ्जनेयसहस्रनामस्तोत्र | ० | ४ |
| गणपतिसहस्रनामस्तोत्र | ० | ४ |

वाविळ्ळ. रामस्वामिशास्त्रिलु अण्ड् सन्स्,
२९२, एस्प्लनेड् चेन्नपुरी.

# ವಿಶೇಷ ಸೂಚನಾ

---

1 ಮಹಾಪಾಠಶಾಲೆಯ ಪಂಚಾಶತ್ಸಂವತ್ಸರ ಮಹೋತ್ಸವದ ಜ್ಞಾಪಕಾರ್ಥವಾದ ಸಂಚಿಕೆಯು ಪ್ರತ್ಯೇಕ ಬಿಕರಿಗೆ ಸಿದ್ಧವಾಗಿದೆ ಸುಂದರವಾದ ಐದು ಭಾವಚಿತ್ರಗಳಿಂದಲಂಕೃತವಾಗಿ ಉತ್ತಮವಾದ ಕಾಗದದಲ್ಲಿ ಮುದ್ರಿತವಾಗಿರುವುದರಿಂದಲೂ, ಉದ್ದಾಮ ಪಂಡಿತರಿಂದ ರಚಿತಗಳಾದ ಉಪನ್ಯಾಸಗಳಿಂದ ಭರಿತವಾಗಿರುವುದರಿಂದಲೂ, ಸರ್ವರೂ ಗ್ರಹಿಸತಕ್ಕುದಾಗಿರೆ ಕೆಲವು ಪ್ರತಿಗಳು ಮಾತ್ರ ಉಳಿದಿರುವುದರಿಂದ ಇಷ್ಟವುಳ್ಳವರು ಶೀಘ್ರದಲ್ಲಿಯೇ ಕೆಳಗಿನ ವಿಳಾಸಕ್ಕೆ ಬರೆದು ಪಡೆಯಬಹುದು ಬೆಲೆ ಎಂಟಾಣೆ, ಅಂಚ ವೆಚ್ಚ ಎರಡಾಣೆ

2 ಇದುವರೆಗೂ ನಮ್ಮ ಪತ್ರಿಕಗೆ ಚಂದಾದಾರರಾಗುವುದರ ಮೂಲಕ ಪ್ರೋತ್ಸಾಹಕೊಟ್ಟ ಮಹನೀಯರಿಗೆ ಬಹಳ ಕೃತಜ್ಞರಾಗಿದ್ದೇವೆ ಮುಂದೆಯೂ ಹೀಗೆಯೇ ಸಹಾಯಮಾಡಿ, ಕ್ಷೀಣದಶೆಗೆ ಬರುತ್ತಿರುವ ಗೀರ್ವಾಣ ವಿದ್ಯೆಯನ್ನು ಶಕ್ಯವಾದಷ್ಟು ಉದ್ಧಾರಮಾಡಬೇಕಾಗಿ ಪ್ರಾರ್ಥನೆ

| | | | | |
|---|---|---|---|---|
| ಚಂದಾ—ಮೈಸೂರು | ದೇಶದೊಳಗೆ | 1 | 8 | 0 |
| ,, ,, | ಹೊರಗೆ | 1 | 12 | 0 |
| ,, | ಸೀಮೆಯಲ್ಲಿ | 3 | ಷಿಲಿಂಗ್ | |
| ವಿದ್ಯಾರ್ಥಿಗಳಿಗೆ—ಮೈಸೂರು | ದೇಶದೊಳಗೆ | 1 | 0 | 0 |
| ,, | ದೇಶದ ಹೊರಗೆ | 1 | 4 | 0 |

ಚಕ್ರವರ್ತಿ ರಾಮಾನುಜಯ್ಯಂಗಾರ್ಯ,
ಅಧ್ಯಕ್ಷ,
ಸಂಸ್ಕೃತ ಮಹಾಪಾಠಶಾಲಾ, ಮೈಸೂರು

श्रीमन्महाराजसंस्कृतमहापाठशालापत्रिकायाः
विनिमयविषयीभूता एता पत्रिकाः

---

१ भण्डारकर् रिसर्च् इन्स्टिट्यूट् आनल्स्, पूना
२ जर्नल् आफ् ओरियंटल् रिसर्च् मद्रासु
३ प्रबुद्धकर्णाटक, बेंगळूरु
४ मिथिक् सोसैटि जर्नल्, बेंगळूरु
५ यूनिवर्सिटि यूनियन् म्याग्सीन्, मैसूरु
६ एम् टि बि आर्ट्स्कालेजुम्याग्जीयन्, सूरत
७ ओरियंटल् कालेजु म्याग्सीन, लाहोर
८ सद्बोधचन्द्रिके, आनन्दवन
९ श्री शारदा, शृंगेरि
१० कादम्बरीसंग्रह, चामराजनगर
११ सनातनधर्मसंजीविनी, मैसूरु
१२ कर्णाटक चन्द्रिके, मैसूरु
१३ उद्यानपत्रिका, तिरुवादि
१४ सुप्रभातम्, काशी
१५ सुविचारिणी, बेंगळूरु
१६ वै ए ए ए पत्रिका, मल्लेश्वरं, बेंगळूरु
१७ ग्रामजीवन, लक्ष्मीपुरं, मैसूरु
१८ आन्ध्रसाहित्य पत्रिका, काकिनाड

# सुचना.

'मानमेयरहस्यश्लोकवार्तिकम्"

इति नाम कश्चिन्महाप्रबन्ध आनुष्टुभश्लोकरूपेण सग्रहीतः सर्वसिद्धान्तसारसग्रहरूप परस्सहस्रविषयविभक्त एतत्पत्रिका-संपादकेन प्रणीत मुद्रित प्रकाशितश्चास्ति। मूल्यमस्य (6) षट् रूपकाणि प्रापणभृति पृथगेव

उपलब्धिस्थानं—पत्रिकासंपादक'

## ಶ್ರೀ ಮಧ್ವಸಿದ್ಧಾಂತ ಪ್ರಕಾಶಿನೀ (ಮಾಸಪತ್ರಿಕೆ)

ಈ ಪತ್ರಿಕೆಯು ಪ್ರಾರಂಭವಾಗಿ ಒಂಭತ್ತು ವರ್ಷಗಳಾದುವು ಇದರಲ್ಲಿ ಪ್ರಕಟವಾಗತಕ್ಕ ವಿಷಯಗಳು ಅತ್ಯುತ್ಕೃಷ್ಟವಾದುವು ಸರ್ವರಿಗೂ ತಿಳಿಯುವಂತೆ ಕನ್ನಡ ಭಾಷೆಯಲ್ಲಿ ಅನೇಕ ಪಂಡಿತರುಗಳಿಂದ ವಿಷಯಗಳು ಬರಿಯಲ್ಪಡುತ್ತಲಿವೆ ಈ ಪತ್ರಿಕೆಯಂತೆ ನಮ್ಮಲ್ಲಿ ಮತಪ್ರಕಾಶಕವಾದುದು ಮತ್ತಾವುದೂ ಇರುವುದಿಲ್ಲ ಇದರಲ್ಲಿ ಮಧ್ವಮತಕ್ಕೆ ಸಮ್ಬಂಧಿಸಿದ ವಿಷಯಗಳಲ್ಲದೆ, ಇತರ ಮತಗಳ ಪ್ರಮೇಯಗಳೂ, ನೀತಿ, ಧರ್ಮ, ಪುರಾಣೇತಿಹಾಸಗಳಲ್ಲಿ ಕಂಡುಬರುವ ಅನೇಕ ವಿಷಯಗಳೂ ಬರಿಯಲ್ಪಡುತ್ತಲಿವೆ ಈ ಪತ್ರಿಕೆಯನ್ನು ಆದರಿಸುವಂತೆ ಸರ್ವರೂ ಪ್ರಾರ್ಥಿಸಲ್ಪಡುತ್ತಾರೆ

ಇದರ ವಾರ್ಷಿಕಚಂದಾ ರೂ ೨–೪–೦ (ಟಪ್ಪಾಲು ಸಮೇತ) ಪೋಷಕರು ೧ನೇ ತರಗತಿ ರೂ ೧೦–೦–೦ ೨ನೇ ತರಗತಿ ರೂ ೫–೦–೦ ಹಿಂದಿನ ಸಂಪುಟಗಳನ್ನಪೇಕ್ಷಿಸುವವರು ಬರೆದು ತರಿಸಿಕೊಳ್ಳಬಹುದು

ಕೆ ವ್ಯಾಸಾಚಾರ್ಯ, ಬಿ ಎ,

ಕಾರ್ಯದರ್ಶಿ, ಮಧ್ವಸಿದ್ಧಾಂತ ಪ್ರಕಾಶಿನೀ ಸಭಾ, ಮೈಸೂರು.

# क्रय्यसंस्कृतपुस्तकानि.

# ವಿಶೇಷ ಸೂಚನಾ

---

1 ಮಹಾಪಾಠಶಾಲೆಯ ಪಂಚಾಶತ್ಸಂವತ್ಸರ ಮಹೋತ್ಸವದ ಜ್ಞಾಪಕಾರ್ಥವಾದ ಸಂಚಿಕೆಯು ಪ್ರತ್ಯೇಕ ಬಿಕರಿಗೆ ಸಿದ್ಧವಾಗಿದೆ ಸುಂದರವಾದ ಐದು ಭಾವಚಿತ್ರಗಳಿಂದಲಂಕೃತವಾಗಿ ಉತ್ತಮವಾದ ಕಾಗದದಲ್ಲಿ ಮುದ್ರಿತವಾಗಿರುವುದರಿಂದಲೂ, ಉದ್ದಾಮ ಪಂಡಿತರಿಂದ ರಚಿತಗಳಾದ ಉಪನ್ಯಾಸಗಳಿಂದ ಭರಿತವಾಗಿರುವುದರಿಂದಲೂ, ಸರ್ವರೂ ಗ್ರಹಿಸತಕ್ಕುದಾಗಿದೆ. ಕೆಲವು ಪ್ರತಿಗಳು ಮಾತ್ರ ಉಳಿದಿರುವುದರಿಂದ ಇಷ್ಟವುಳ್ಳವರು ಶೀಘ್ರದಲ್ಲಿಯೇ ಕೆಳಗಿನ ವಿಳಾಸಕ್ಕೆ ಬರೆದು ಪಡೆಯಬಹುದು ಬೆಲೆ ಎಂಟಾಣೆ, ಅಂಚೆ ವೆಚ್ಚ ಎರಡಾಣೆ

2 ಇದುವರೆಗೂ ನಮ್ಮ ಪತ್ರಿಕೆಗೆ ಚಂದಾದಾರರಾಗುವುದರ ಮೂಲಕ ಪ್ರೋತ್ಸಾಹಕೊಟ್ಟ ಮಹನೀಯರಿಗೆ ಬಹಳ ಕೃತಜ್ಞರಾಗಿದ್ದೇವೆ ಮುಂದೆಯೂ ಹೀಗೆಯೇ ಸಹಾಯಮಾಡಿ, ಕ್ಷೀಣದಶೆಗೆ ಬರುತ್ತಿರುವ ಗೀರ್ವಾಣ ವಿದ್ಯೆಯನ್ನು ಕೈಲಾದಷ್ಟು ಉದ್ಧಾರಮಾಡಬೇಕಾಗಿ ಪ್ರಾರ್ಥನೆ

| | | | |
|---|---|---|---|
| ಚಂದಾ—ಮೈಸೂರು ದೇಶದೊಳಗೆ | 1 | 8 | 0 |
| ,, ,, ಹೊರಗೆ | 1 | 12 | 0 |
| ,, ಸೀಮೆಯಲ್ಲಿ | 3 ಷಿಲಿಂಗ್ | | |
| ವಿದ್ಯಾರ್ಥಿಗಳಿಗೆ—ಮೈಸೂರು ದೇಶದೊಳಗೆ | 1 | 0 | 0 |
| ,, ದೇಶದ ಹೊರಗೆ .. | 1 | 4 | 0 |

ಎಚ್ ಯೋಗನರಸಿಂಹಾರ್ಯರು,

ಅಧ್ಯಕ್ಷ,

ಸಂಸ್ಕೃತ ಮಹಾಪಾಠಶಾಲಾ, ಮೈಸೂರು

## सधन्यवादमस्माभिरङ्गीकृता एताः
## विनिमयरूपाः पत्रिकाः

---

१ भण्डारकर् रिसर्च् इन्स्टिट्यूट् आनल्स्, पूना
२ जर्नल् आफ् ओरियंटल् रिसर्च्, मद्रासु
३ प्रबुद्धकर्णाटक, बेंगळूरु
४ मिथिक् सोसैटि जर्नल्, बेंगळूरु
५ यूनिवर्सिटि यूनियन् म्याग्सीन्, मैसूरु
६ एम् टि बि आर्ट्स्कालेज़ुम्याग्जीयन्, सूरत.
७ ओरियटल् कालेजु म्याग्सीन, लाहोर्
८ सद्बोधचन्द्रिके, आनन्दवन
९ श्री शारदा, शृंगेरि.
१० कादम्बरीसंग्रह, चामराजनगर
११ सनातनधर्मसंजीविनी, मैसूरु
१२ कर्णाटक चन्द्रिके, मैसूरु
१३ उद्यानपत्रिका, तिरुवाडि
१४. सुप्रभातम्, काशी
१५. सुविचारिणी, बेंगळूरु
१६ वै एं एं ए पत्रिका, मल्लेश्वर, बेंगळूरु
१७ ग्रामजीवन, लक्ष्मीपुर, मैसूरु
१८ आन्ध्रसाहित्य पत्रिका, काकिनाड
१९ विश्वकर्णाटक, बेंगळूरु
२० ताय्नाडु मैसूरु
२१ मञ्जुभाषिणी, काञ्चीपुरम्
२२ सूर्योदय , काशी
२३ उद्योतः, लाहोर्

# ಸೂ ಚ ನಾ

'मानमेयरहस्यश्लोकवार्तिकम्"

इति नाम कश्चिन्महाप्रबन्ध आनुष्टुभश्लोकरूपेण सगृहीतः सर्वसिद्धान्तसारसग्रहरूप परस्सहस्रविषयविभक्त एतत्पत्रिका-सपादकेन प्रणीत मुद्रित प्रकाशितश्चास्ति। मूल्यमस्य (6) षट् रूपकाणि प्रापणभृति पृथगेव

उपलब्धिस्थान—पत्रिकासंपादक.

---

## ಶ್ರೀ ಮಧ್ವಸಿದ್ಧಾಂತ ಪ್ರಕಾಶಿನೀ (ಮಾಸಪತ್ರಿಕೆ)

ಈ ಪತ್ರಿಕೆಯು ಪ್ರಾರಂಭವಾಗಿ ಒಂಭತ್ತು ವರ್ಷಗಳಾದುವು ಇದರಲ್ಲಿ ಪ್ರಕಟವಾಗತಕ್ಕ ವಿಷಯಗಳು ಅತ್ಯುತ್ಕೃಷ್ಟವಾದುವು ಸರ್ವರಿಗೂ ತಿಳಿಯುವಂತೆ ಕನ್ನಡ ಭಾಷೆಯಲ್ಲಿ ಅನೇಕ ಪಂಡಿತರುಗಳಿಂದ ವಿಷಯಗಳು ಬರಿಯಲ್ಪಡುತ್ತಲಿವೆ ಈ ಪತ್ರಿಕೆಯಂತೆ ನಮ್ಮಲ್ಲಿ ಮತಪ್ರಕಾಶಕವಾದುದು ಮತ್ತಾವುದೂ ಇರುವುದಿಲ್ಲ ಇದರಲ್ಲಿ ಮಧ್ವಮತಕ್ಕೆ ಸಮ್ಬಂಧಿಸಿದ ವಿಷಯಗಳಲ್ಲದೆ, ಇತರ ಮತಗಳ ಪ್ರಮೇಯಗಳೂ, ನೀತಿ, ಧರ್ಮ, ಪುರಾಣೇತಿಹಾಸಗಳಲ್ಲಿ ಕಂಡುಬರುವ ಅನೇಕ ವಿಷಯಗಳೂ ಬರಿಯಲ್ಪಡುತ್ತಲಿವೆ ಈ ಪತ್ರಿಕೆಯನ್ನು ಆದರಿಸುವಂತೆ ಸರ್ವರೂ ಪ್ರಾರ್ಥಿಸಲ್ಪಡುತ್ತಾರೆ

ಇದರ ವಾರ್ಷಿಕಚಂದಾ ರೂ. ೨—೪—೦ (ಟಪ್ಪಾಲು ಸಮೇತ) ಪೋಷಕರು ೧ನೇ ತರಗತಿ ರೂ. ೧೦—೦—೦. ೨ನೇ ತರಗತಿ ರೂ ೫_೦_೦ ಹಿಂದಿನ ಸಂಪುಟಗಳನ್ನಪೇಕ್ಷಿಸುವವರು ಬರೆದು ತರಿಸಿಕೊಳ್ಳಬಹುದು.

ಕೆ ವ್ಯಾಸಾಚಾರ್ಯ, ಬಿ.ಎ,

ಕಾರ್ಯದರ್ಶಿ, ಮಧ್ವಸಿದ್ಧಾಂತ ಪ್ರಕಾಶಿನೀ ಸಭಾ, ಮೈಸೂರು.